# श्रीमातृतत्त्वप्रकाशः (सटीकः)

## श्रीअरविन्दग्रन्थानुवादः

कपालिशास्त्रिविरचितः

# विज्ञप्तिः

श्रीमातृतत्त्वजिज्ञासायामनर्घप्रयोजनः "श्रीमाते"ति भगवदरविन्ददर्शनग्रन्थः सुप्रसिद्धः । अल्पविस्तरोऽप्यनल्परहस्यगर्भोऽयं रसोत्तरसाहित्यसन्दर्भः । अस्य भूयानन्तिमो भागः परदेवतायाः प्रसादलाभोपायफलानि व्याचष्टे, मातुर्माहाभाग्यं तन्मूर्तिविशेषाणां विशिष्ट-गुणलक्षणवैभवानि च प्रस्तौति । अस्याङ्गलगद्यनिबद्धस्य संस्कृतपद्यात्मकः "श्रीमातृतत्त्वप्रकाशः" सार्थकना-माऽयमनुवादनिबन्धः सटीकोऽस्मत्प्रणीत इह प्रकाश्यते ॥ सोऽयं मातृतत्त्वमीमांसकानां सहृदयानां गीर्वाणवाणी-रतानां आराधनाय प्रभुः स्यादित्याशंसे ॥

वेदवेदान्तागमसिद्धान्तानां सामरस्यमावहन्ति श्रीअरविन्दग्रन्था इति तदध्यायिनां प्रायेणेदं विदितम् ॥

अस्य दर्शनस्य सुखबोधोपकारिका कारिकावलिरस्मद्विरचिता "तत्त्वप्रभा"ख्या ग्रन्थस्यान्ते दत्ता ॥

इदं च पाठकमहाशयैरवधेयम् । मनोमयप्रधानस्य मानुष्यकस्य विज्ञानमयविकासादेव दिव्यक्षेमलाभ इत्यस्य सिद्धान्तस्य पृष्ठवंशस्थानीयो भाव इति बोध्यम् ॥

मनोमयभूमिकायाः परं यद्विज्ञानाख्यं महर्लोकतत्त्वं तदेवेह विज्ञानपदेनाभिप्रेयते । न पुनर्विशिष्टं ज्ञानं बुद्धिरिति वा ॥ कक्ष्या-चैत्यादिपदानां तत्र तत्र टीकायां विवरणं द्रष्टव्यम् ॥

श्लोकानामादौ वृत्तनामानि दत्तानि ॥

विषुसंवत्सर, फाल्गुन बहुल नवमी, सोमवासरः (9-3-1942.) — ति. वि. कपालिशास्त्री.

# विषयसूचिका

## मुखबन्धः

आर्यावृत्तम्

श्रीभगवानरविन्दो
भिन्दन् घनमन्धतमसमन्तरितम् ।
उज्ज्वलमहसा तपसा
विदधानो विश्वमङ्गलं जयति ॥१॥

"श्रीभगवानरविन्दो जयति" जयत्यर्थेन नमस्कार आक्षिप्यते । "अन्धतमसं" चित्प्रकाशविरोधि "घनं" अध्यण्डमधिपिण्डं च अन्धतमसस्य भावपदार्थत्वेनानुभूयमानत्वं ज्ञापयितुं इदं विशेषणम् । "अन्तरितं" अन्तर्गतं, प्रतिबन्धकं चित्प्रकाशविलसनस्य । जडत्व-लक्षणं ह्यन्धतमसं, यस्य प्रध्वंसात् चितेरप्रतिहतो विकासः स्यात् ।

"तपसा" करणेन अन्धतमसभेदकेन "उज्ज्वलमहसा" यस्मिन् तपसि उज्ज्वलं महो ज्योतिर्विज्ञानाख्यं तुरीयव्याहृतिशब्दव्यवहार्यं, तेन भिन्दन्निति सम्बन्धः ॥

चिद्विकासपरिपन्थिनो जाड्यलक्षणस्य ध्वान्तस्य विनिवार्यत्वं विज्ञानपदवाच्यमहोवैभवेन तपसा नान्यथेति भगवतः श्रीअरविन्दमुनेः तपसः प्रयोजनं तमःप्रध्वंसद्वारा विश्वमङ्गलविधानमित्युक्तं भवति ॥१॥

**विश्वहितैषी विद्वान्**
**विकसद्विश्वस्य नवनवं जन्म ।**
**विष्टपमातुस्तत्त्वं**
**व्याचख्यौ योगचक्षुषा दृष्टम् ॥२॥**

विकसनं विश्वस्य गतिरिति द्योतयितुं "विकसद्विश्वस्ये" त्याह । "नवनवं जन्म" विश्वविकासे प्रवर्धमाने अनाविष्कृतपूर्वाणि सूक्ष्माणि गुप्तानि वा रूपाणि प्रकाशानि भवन्ति । तेन विश्वस्यानुपदं नूत्नो विकासः संस्कारो वा रूपान्तरपरिणामाय प्रभवति । "तद्विद्वान्" अनेन विश्वमीमांसायामाचार्यस्य वैचक्षण्यमुक्तम् । अध्यात्मविचारो मोक्षसाधनादिः प्रायशः साधारणी लोके । सर्गार्थविचारस्तु दुर्घटः ॥

"योगचक्षुषा दृष्टं" आर्षदृष्टिजन्यं ज्ञानमिह ग्रन्थकृतोपदिष्टं, न तु विचारजन्यं शास्त्रीयसंस्कारबलेन स्वकपोलकल्पितम् । शास्त्रस्यापि प्रामाण्यसिद्धिर्दृष्टिमूलकत्वेनेति तु सार्थम् ॥२॥

भव्यं यदाह भगवान्
भुवनसवित्रीरहस्यमतिगहनम् ॥
भव्यं तदिदं दर्शन-
मुर्वीकल्याणभाजनं गेयम् ॥३॥

"नव्यं दर्शनं" श्रीमातृतत्त्वप्रतिपादकं दर्शनमूलकं शास्त्रं पूर्वेषां दर्शनानां विलक्षणम् । नव्यं वैशिष्ट्यात् । वैशिष्ट्यं च ग्रन्थे प्रतिपादितार्थेषु सुगमम् ॥

श्रीमातृतत्त्वोपदेशकमिदं श्रुतिस्थानीयं प्रमाणं साधकानामित्यवगन्तव्यम् ॥

"उर्वीकल्याणभाजनं" मानुष्यकमाङ्गल्यसिद्ध्युपायप्रदर्शकत्वात् ॥ भाजनं आश्रयभूतम् ॥३॥

हृद्यैराङ्गलगद्यैः
प्रसन्नगम्भीरसाहितीध्वनितैः ।
आचार्यो यदकार्षी-
दार्योऽयं पूर्णयोगमार्गदृशाम् ॥४॥

"प्रसन्नगम्भीरसाहितीध्वनितैः" ग्रन्थकृतो न केवलं योगचक्षुः

ेन तत्वानि साक्षात्क्रियन्ते, अपि तु लोकोत्तरं सर्वतोमुखं पाण्डित्यं हृदयहृदयसमावर्जनं साहित्यं च ॥ "पूर्णयोगमार्गदृशां" श्री अरविन्दोपदिष्टयोगसाधकानां आद्योऽयमाचार्यो मार्गदर्शी श्री अरविन्द एवेति ग्राह्यम् । यत्पदस्योत्तरश्लोके तत्पदेनान्वयः ॥४॥

तत्पद्यैर्गुर्वर्थै-
लघुशब्दगृहीतमूलतात्पर्यैः ।
आर्याणां वरवाण्या
सुधियां कर्णे सुधायतां कलितम् ॥५॥

यदाचार्यः आङ्गलगद्यैरकार्षीत् तत् "आर्याणां वरवाण्या" संस्कृतभाषया पद्यैः कलितं गृहीतं रचितमिति यावत् । सुधियां कर्णे सुधायतामिति योजना ॥

लघुशब्देत्यादिना संस्कृतानुवादे किञ्चिन्मूलादधिकं न्यूनं वा स्यादिति ध्वन्यते । तत्तु क्वाचित्कं मूलतात्पर्याविरोधि चेति विज्ञैः क्षन्तव्यमित्याशयः ॥

गीर्वाणवाण्याः सकलवाङ्मयोत्तरं हृदयङ्गमत्वं रसिकलोकसंमतं, अत एव धीमतां सहृदयानां कर्णामृतायतामित्याशंसा ॥५॥

# श्रीमातृतत्त्वप्रकाशः (सटीकः)

## १

### चतुर्व्यूहम् – मातुर्माहाभाग्यम्

आर्यावृत्तम्

श्रीमातुश्चत्वारः
शक्तिविशेषाश्चकासति श्रेष्ठाः ।
ये दिव्याश्चत्वारो
व्यक्तिविशेषाः प्रकीर्तिताः प्राज्ञैः ॥१॥

चत्वारस्तनुबन्धा
अंशविशेषाश्च ये जगन्मातुः ।
गणनीयाः प्रामुख्ये
जगतीव्यापारवर्तिनो देव्याः ॥२॥

श्रीमातुः शक्तयो बह्व्यः । तत्र जगद्व्यापारेष्वधिकृताश्चतस्रो मुख्याः। अतस्तासामिह श्रेष्ठत्वमुक्तम्। तस्मात्प्राधान्येनायं प्रविभागः, न तु साकल्येन। मातुः शक्तिमनूद्य दिव्यव्यक्तित्वं विधीयते ॥

ये प्रागुक्तास्ते पुनर्मातुस्तनुबन्धाः स्वीकृतविग्रहा मूर्तयोऽशाश्च भवन्ति। शक्तीनां व्यक्तित्ववत् मूर्तित्वांशत्वेऽपि विधेये। व्यक्तित्व-तनुबन्धत्वांशत्वानां मातुः शक्तिषु सामानाधिकरण्यं ज्ञेयम्। अत्र व्यक्तित्वं च ज्ञानवत्त्वं। अंशानां ज्ञानवत्त्वे मूर्तित्वे व्यक्तित्वे वा प्रोक्ते, अंशिन्याः ज्ञानवत्त्वादि कैमुत्यन्यायेन सिद्धम् ॥ ततः चित्कलाविलासाभिव्यक्ता एताः शक्तयो नान्या इति मातुर्व्यक्तित्वं मुख्यं न गौणमिति च गम्यते ॥१,२॥

तनुमध्या

एभिः प्रसरन्ती स्वीयेषु नितान्तम् ।
शक्तिप्रविभागैः प्राणिष्वखिलेषु ॥३॥

सर्गानविरोधं नैजान्त्सन्दधती ।
सङ्कल्पवक्लृप्तान् सर्वानादिशती ॥४॥

शक्तीर्जगदम्बा तत्तत्सदृशेषु ।
स्वीयाश्च सहस्रं कार्येष्वनुशास्ति ॥५॥

एभिरित्यारभ्यानुशास्तीत्यन्तं श्लोकत्रयमेकवाक्यम् ॥ "एभिः शक्तिप्रविभागैः" चतुर्भिः "नैजान्" स्वीयान् "सर्गान्" सृष्टान् पदार्थान् । 'स्वीयेषु प्राणिषु' स्वीयत्वं स्वपरिणामत्वात् । 'अविरोधं' यथा विरोधो न स्यात् तथा 'सङ्गत्यवकॢप्तान्' सम्बन्धोपपत्तिविधानेन सामरस्यं प्रापितानित्यर्थः ॥ मातुः प्रसरणादिक्रियाश्चतसृभिर्महेश्व-र्यादिभिर्द्वारा निर्वर्त्यन्त इत्यर्थः । एवं स्वात्मीयस्य शक्तिसहस्रस्य जगत्कार्येष्वनुशासनं चेति ज्ञेयम् ॥ प्रसरन्ती, सन्दधती आदिशती-त्येतानि असमापकान्यपि विधेयानि ॥३–५॥

वसुमती

**अंशैर्बहुविधै- रेकाऽपि जननी ।**
**सन्दर्शयति नः स्वात्मानमतुला ॥६॥**

यद्यप्येकैव समष्टिदृष्ट्यां, भिन्नै रेवांशैः व्यष्टिदृष्ट्यां अस्माकं परिचितायां, स्वात्मानं प्रकाशयतीत्यर्थः ॥६॥

**व्यक्तिर्बहुगणा मातुस्त्रिजगताम् ।**
**शक्तिश्च गणना- मत्येति महती ॥७॥**

व्यक्तिरितिजातावेकवचनं, बहुगणेति विशेषणोपादानात् । एवं शक्तिश्च गणनातीता । बह्व्यः शक्तयो व्यक्तयश्च बह्व्यः इत्यर्थः ॥७॥

**आभान्ति च विभू- त्यात्मान इतरे ।**
**सम्भूतिनिवहा राजन्ति च परे ॥८॥**

विभूतय ऊर्जिताः मातुस्तेजोंऽशविशेषाः ।

सम्भूतयः प्रादुर्भावाः । कार्यविशेषान् निमित्तीकृत्य स्वीया अंशविशेषाः स्वात्मनो विनिर्गमय्य पृथक्सत्तां प्रापिताः, कार्यनिर्वर्तनान्तरं प्रतिसंहृताः, क्वचित् स्वसत्त्वसामर्थ्यानुसारेण विश्वक्षेत्रे व्यापाराय विसृष्टाः । शक्तयो व्यक्तयश्च नित्याः । विभूतयः प्रायेण । प्रादुर्भावास्तु नैमित्तिकाः ॥८॥

**त्रैलोक्यजननी- कृत्यानि शिरसा ।**
**शक्या न गणना ऽऽमीषां निवहताम् ॥९॥**

मातुः कार्याणि शिरसा निवहतां नितरां वहतां अमीषां शक्तिव्यक्तिविभूतिसम्भूतिनिवहानां नास्ति सङ्ख्या ॥९॥

**यामत्र विनुमो मातेति किल सा ।**
**चिच्छक्तिरखिला- ध्यक्षा च परमा ॥१०॥**

विनुमः स्तुमः भजाम इति यावत् । मातुः स्वरूपं चिच्छक्तिरित्युपदिष्टम् । किल सम्प्रदाये ॥१०॥

अंशानगणना- नेकापि दधती ।
तीव्रां च धिषणा- मत्येति बृहतीम् ॥११॥

अप्रतिहतवेगा विशाला कुशाग्राऽपि मानुषी मतिर्मातरं अंश-बहुलामनुगन्तुं न शक्नोतीत्यर्थः ॥११॥

ईशस्य चिदियं शक्तिश्च सकला ।
सर्गादपि निजा- दूर्ध्वं विजयते ॥१२॥

ईशस्य परस्य या चित् सैव माता, या शक्तिश्च भवति ॥ एवं सा विश्वाध्यक्षाऽपि विश्वस्मात्परस्तात् परस्मिन् वर्तते । तद्धि तस्याः परं धाम ॥१२॥

दूरेऽपि जननी पारेऽस्य तमसः ।
स्वात्मानमिह नः किञ्चित्प्रथयितुम् ॥१३॥
स्वाङ्गीकृतमितै रूपैरनुपमैः ।
तत्तत्प्रकृतितः कृत्या च सुगमैः ॥१४॥
ग्राह्यं मितधिया- मस्माकमवनौ ।
संवेद्यमपि सा माता वितनुते ॥१५॥

श्लोकत्रयमेकान्वयम्॥ यद्यप्यस्माकं दूरे तमसः पारे मातुः परं धाम, तथापि किञ्चिदात्मानं दर्शयति, तत्कथं? आह। स्वयं परिच्छेदातीताऽपि आत्मनाऽङ्गीकृतैः मितैः परिच्छिन्नैः रूपैः देवीमूर्तिरूपैः तत्तत्प्रकृतिभिः कृत्या जातावेकवचनं व्यापारैश्च स्वात्मनः किञ्चिद् ग्राह्यं अस्मद्बुद्धेर्ग्रहणक्षमं, संवेद्यं अस्माकमनुभवयोग्यं च कुरुते।

स्वयं सर्वातीताऽपि परिच्छेदविशिष्टमूर्तिस्वीकारेण तासां दिव्याकृतीनां स्वभावैर्गुणैः कर्मभिश्च परिमितधियो मानुषानस्मान् स्वात्मनः किञ्चिदनिर्वर्ण्यं ग्राहयति अनुभावयति चेति तात्पर्यम् ॥१३-१५॥

## २

### मातुस्त्रैविध्यम्

मणिमध्यम्

विश्वमतीत्य प्रोज्ज्वलितं
विश्वविलासं विश्वहितम् ।
जीवमयं च श्रीजननी-
रूपत्रिकमावेद्यमिदम् ॥१॥

मातुस्त्रिविधत्वमुच्यते । मूलशक्तिराद्या विश्वातीता । विश्वेश्वरी महाशक्तिः । जीवभूता चेति त्रिरूपत्वं मातुरुक्तम् ॥१॥

हंसमाला

अथ रूपाणि तानि प्रथितान्यत्र मातुः ।
विदितान्यस्मदादेः सुतरां नस्तदा स्युः ॥२॥

अनुभूतं यदैक्यं परया चित्तिशक्त्या ।
महतो जीवराशे- र्भुवनानां च धात्र्या ॥३॥

कथं विदितं स्यादस्माकं मातुस्त्रैविध्यम् ? तद्युग्मेनाह ॥ या चिच्छक्तिर्जीवराशीन् विश्वं च धत्ते, तया सहास्माकं यदा ऐक्यानुभूतिर्जायते तदा मातुरुक्तं त्रैविध्यं किञ्चिद्विदितं स्यात् ॥ चिदेव चितिः ॥२,३॥

भुवनानां परस्तात् परमा शक्तिराद्या ।
परमेणोल्लसन्ती रममाणा नितान्तम् ॥४॥
परमाव्यक्तनित्यं वरपुंसो रहस्यम् ।
प्रथमा येन सर्गं जननी संयुनक्ति ॥५॥

अथ प्रथमं सङ्क्षेपेण मातुस्त्रिविधत्वोल्लेखः ॥ तत्र द्वाभ्यां आद्या शक्तिरुक्ता । प्रथमा जननी मूलशक्तिर्माता सृष्टेः परस्तात् परमेण सह नित्योल्लासिनी तस्य परवस्तुनो रहस्येन सृष्टेः सम्बन्धं विधत्ते ॥४,५॥

महती शक्तिरम्बा रममाणाऽधिलोकम् ।
सकलं भूतजातं सकलं वस्तु सृष्ट्वा ॥६॥

निखिलं च प्रविष्टा नियुतं शक्तिसङ्ख्याः ।
सरणीश्चापि धत्ते सकलं निर्वहन्ती ॥७॥

अथ महाशक्तिर्द्वाभ्याम् ॥ अखिलोकं रममाणा महाशक्तिस्तु सैव सृष्ट्वा तदनुप्रविश्य सर्वं जगत्कार्यं निर्वहति ॥६,७॥

अनयोर्यन्महत्यो- रुभयोः स्वात्मशक्त्योः ।
कथितं तस्य धाम्नो वरमूर्तिर्भवन्ती ॥८॥

दधती जीवभूता निकटं ते उभे नः ।
मनुजव्यक्तिदिव्या- स्पदयोर्मध्यगाऽऽस्ते ॥९॥

आदिशक्ति-महाशक्त्योर्यद्धाम तेजः प्रभावः सामर्थ्यमिति यावत् । तस्य मूर्तिर्भवन्ती तृतीया जीवभूता माता ते उभे अपि अस्माकं सन्निधापयति ॥ एषा मानुषव्यक्तेर्दिव्यास्पदस्य दिव्यस्थानस्य च मध्यगाऽऽस्ते ॥ यद्यप्यास्पदं स्थानवाचि, प्रकरणवशात् दिव्यास्पदं दिव्यप्रकृतित्वेन व्याख्येयम् ॥ मनुजव्यक्तेः दिव्यपरिणामप्राप्तये हि माता माध्यस्थ्यं कुरुते ॥८,९॥

## ३

### आद्या शक्तिः

शार्दूलविक्रीडितम्

आद्या शक्तिरसौ समस्तजगतां
पङ्क्तेः परस्तान्निजे
प्रज्ञाने पुरुषं बिभर्ति परमं
नित्ये सती जाग्रती ।
सीमातीतनिधाननिस्तुलबल-
स्यैका ज्वलन्ती परा
सान्निध्यस्य परस्य वाग्विषयता-
दूरस्य चावासभूः ॥१॥

अथ षड्भिः श्लोकैः आदिशक्तेर्मातुःस्वरूपं कार्याणि च प्रस्तौति आद्या शक्तिरित्यादिना ॥ विश्वस्मात्परस्तात्परमं नित्ये निजे प्रज्ञाने

बिभर्तीत्युक्त्या अखण्डं तस्याश्चित्स्वरूपं परमेण पूरितमित्युक्तं भवति ॥

उत्तरार्धेन निरवधिकस्य निधानभूतस्य निरुपमस्य बलस्य सा वासभूमिरित्याह । तथा अनिर्वाच्यस्य सान्निध्यस्य चेति ॥ परं सान्निध्यं च अनिर्वाच्यं अनुभवैकवेद्यं, यत्र मूर्तं अमूर्तं ज्योतिरानन्दो बलमिति सर्वं निहितं, यतश्च सर्वं प्रवहतीत्युपलभ्यमानमपि वैशिष्ट्यनिर्वर्णननिरपेक्षं सर्वाश्रयत्वेन वर्तमानं वस्तु ॥१॥

सत्यान्यात्मनि बिभ्रती परमभि–
व्यक्तिक्षमाण्यादरा–
दाहोस्वित्प्रथयन्त्यतीव गहने
लीनान्यमून्युज्ज्वला ।
चित्तेजस्यवतार्य शक्तिबहुलाऽऽ
खण्डे निजे शक्तितां
प्राणानन्त्यधरा तनुं च भुवने
तेभ्यो ददात्यम्बिका ॥२॥

गहने परस्मिन् रहस्ये लीनानि गूढानि परं सुतरां अभिव्यक्तिक्षमाणि स्पष्टभावयोग्यानि सत्यानि सत्यरूपाणि आत्मनि बिभ्रती काले प्रकाशयितुं कानिचिद्दधाना, आहोस्वित्, अथवा कानिचि-

प्रथयन्ती व्यञ्जयन्ती, व्यवस्थितविकल्पोऽयं, अखण्डे निजे चित्तेजसि तान्यवतार्य तेभ्यः शक्तित्वं ददाति शरीरं च ॥

शक्तिबहुला अमितशक्तिर्माता। अत एव शक्तित्वदानसमर्था। प्राणानन्त्यधरा प्राणानामानन्त्यस्य धरा धर्त्री, अनन्तप्राणेत्यर्थः। अत एव अवतार्यमाणसत्यरूपेभ्यः शरीरदानदक्षा ॥२॥

**स्पष्टीभूय विभात्यजस्रमजरं**
**सच्चित्प्रमोदात्मना**
**यस्यां वस्तु परं जगत्सु च यया**
**व्यक्तं समापद्यते।**
**श्रीमात्रेश्वरशक्तिगां क्रमवशाद्**
**द्वैताभिधां च स्थितिं**
**द्वैताद्वैतचिदाकृतिं प्रकृतिपु-**
**म्भावात्मिकां प्रापितम् ॥३॥**

यस्यां मातर्यादिशक्तौ परं वस्तु सच्चिदानन्दस्वरूपेण नित्यं भ्राजते। यया च तत्परं वस्तु जगत्सु व्यक्तं समापद्यते जायते। आदिशक्तेरभिव्यञ्जकत्वं परस्याभिव्यक्तत्वं चोक्तं। यया श्रीमात्रा स्थितिं प्रापितं परं वस्त्विति योजना ॥

स्थितिरवस्थानं॥ स्थितिं विशिनष्टि ॥ ईश्वरशक्तिगां द्वैताद्वैतचिदाकृतिं, क्रमवशाद् द्वैताभिधां प्रकृतिपुम्भावात्मिकां च स्थितिं प्रापितं वस्तु ॥

ईश्वरशक्तिगां ईश्वरशक्ती गच्छतीति ईश्वरशक्तिगा तां, द्वैताद्वैतचिदाकृतिं द्वैतं चाद्वैतं च द्वैताद्वैते ते चिदाकृतिर्यस्यां तां, ईश्वरशक्त्योर्द्वैतं द्वित्वभावः, तयोः पार्थक्येन व्यक्तिमत्त्वात्। अद्वैतं अद्वयभावस्तु तयोः स्वरूपेण चिदेकरसत्वात् ॥ द्वैताभिधां द्वैताख्यां प्रकृतिपुम्भावात्मिकां प्रकृतिपुरुषभावरूपां, पुरुषप्रकृत्योर्द्वैतं चेतनजडविभागमूलकम् ॥ क्रमवशात् क्रमानुसारेण। अयं च क्रमः ॥ यत् परं सत्यमखण्डं सच्चिदानन्दस्वरूपं सर्वज्ञं सर्वशक्तमिति, तत् एकमेवाद्वितीयम्। तत् प्रथममद्वैतमभेदः। ततः चिच्छक्तिविलासाद् द्वैताद्वैतं भेदाभेदः। शक्तिशक्तयोर्व्यापारभेदात् पार्थक्येन व्यक्तत्वाच्च भेदव्यवहारः, स्वरूपेण तु अभेदः ॥ ततश्च द्वैतम् ॥ भेदः जडचेतनमूलकः प्रकृतिपुरुषविभागः ॥

ईश्वरशक्तिविषयकद्वैताद्वैतज्ञानाकारतां पुरुषप्रकृतिगतद्वैतज्ञानरूपतां च मात्रा प्रापितं परं वस्तु जगत्सु स्पष्टीकृतं भवतीति तात्पर्यम् ॥३॥

**सेयं वस्तु वरं जगत्सु जगती–**

**कक्ष्यासु देवेषु त–**

च्छक्तिष्वप्यखिलेष्वमूर्तमपि त-
न्मूर्तं करोत्यद्भुतम् ।
यद्यद्वा भुवनेष्वमीषु विलस-
त्यन्यत्परोक्षेषु यद्
भूत्वा तत्तदलक्ष्यत स्थितमिदं
तस्याः प्रभावात्परम् ॥४॥

सेयं मूलशक्तिः तद्वरं श्रेष्ठं वस्तु कर्म अमूर्तमपि मूर्तं करोति ॥ मूर्तत्वस्याधिकरणं समस्तं भवतीति तद्विविच्याह ॥ जगत्सु भूरादि-लोकेषु जगतीकक्ष्यासु अन्नमयप्राणमयादि-भूमिकासु देवेषु इन्द्रादिषु, तच्छक्तिष्विन्द्राण्यादिषु, यद्यद्भुवनेषु ज्ञातेषु, अन्यद्यद्वा परोक्षेषु अविदितेषु भुवनान्तरेषु, तत्सर्वं भूत्वा परं वस्तु स्थितमलक्ष्यत मातु-र्महिम्नेति ज्ञेयम् ॥४॥

शालिनी

नित्यस्यानन्तस्य गोप्याद्भुतानां
सर्वं मात्रा पूरुषस्य प्रकाशः ।
लीला तस्याः सर्वमीशेन, दैव्याः
शक्तेरंशः सर्वमम्बैव सर्वम् ॥५॥

नित्यस्यानन्तस्य परस्य वस्तुनः पुरुषस्य गोप्याद्भुतानां गोप्यानि रहस्यानि दुर्बोधानि अद्भुतानि च तेषां, मात्रा प्रकाशः मातृकर्तृकं प्रकटनमित्यर्थः ॥

अनन्तस्य तस्याद्भुतानि नित्यस्य तस्य रहस्यानि च मात्रा प्रकटितान्येव इदं सर्वमिति ज्ञेयम् ॥ एवं तस्याः परेण सह लीलैव सर्वम् ॥ तस्याः चिच्छक्तेरंश एव सर्वम् । सैव सर्वम् ॥५॥

मालिनी

**इह किमपि न भाव्यं यन्न सा निश्चिनोति**
**प्रभुरपि परमो यन्नानुजानाति देवः ।**
**इह किमपि न रूपि स्याद्यदीशेरिता नो**
**घटयति निजमोदे वीक्ष्य बीजात्मनाऽम्बा ॥६॥**

क्वचित्कदाचिद्वा मात्रा निश्चितं परमेण प्रभुणा निराकृतं स्यादिति माभूद्भ्रमः । परमस्यैवाशयानां मातरि सङ्क्रान्तत्वात् ॥ आनन्दस्यैव सर्जकत्वात् तत्र घटनं युक्तम् ॥ बीजात्मना वीक्ष्य, स्रक्ष्यमाणस्य रूपगुणादि इदमित्थं स्यादिति वीक्षणमत्र ज्ञेयम् ॥

रूपीति गुणान्तराणामप्युपलक्षणम् ॥६॥

४

## महाशक्तिः

शिखरिणी

महाशक्तिर्माता निखिलमपि साध्नोति परतः
स्वया संविच्छक्त्या प्रहितमिह विश्वातिगमया ।
इदं विश्वाध्यक्षा प्रविशतितरां विश्वमपि सा
दधाना सान्निध्याद्भुवनपटलीं स्वात्मरचिताम्

॥१॥

परतः परस्मात् विश्वातिगमया विश्वातीतया आद्यया शक्त्या प्रहितं प्रेषितम् । स्वात्मरचितां भुवनपटलीं सान्निध्यात् सन्निधि-बलात् दधाना इदं विश्वं प्रविशतितरामिति सम्बन्धः ॥

अथ सन्निधेः प्रभावमाह ॥१॥

वसन्ततिलका

यस्याश्च सन्निधिरसौ भुवनानि सम्यग्
वीर्येण विश्वधरणेन च दिव्यचित्त्या ।
धत्ते प्रमोदलहरीभिरपि प्रपूर्य
स्थातुं च शक्तिरिह तानि विना न येषाम् ॥२॥

सम्यग्वीर्येण श्रेष्ठेन वीर्येण, विश्वधारकेण, चिदेव चित्तिः, प्रमोद आनन्दः ॥ मातुः सन्निधिः आनन्दचिद्वीर्यादिना भुवनानि प्रपूर्य धारयत इत्यर्थः ॥ स्थातुं चेति पृथग्वाक्यम् ॥ तानि विना विश्वधरणवीर्यादीनि विना तेषां भुवनानां स्थातुमपि न शक्तिः ॥२॥

अत्यन्तबाह्यमिह किञ्चन रूपमस्याः
कार्याणि निर्वहति यत् प्रकृतिं वदामः ।
शक्तीः समूह्य सरणीरपि सामरस्याद्
व्यूह्य प्रचोदयति सैव कृतीः प्रकृत्याः ॥३॥

मातुरत्यन्तं बाह्यं रूपविशेषमेव प्रकृतिं ब्रूमः । मातैव शक्तीनां क्रियापद्धतीनां संयोजनं विभजनं च सामरस्येन विधाय प्रकृत्याः कार्याणि प्रेरयतीत्यर्थः ॥३॥

भोक्तुं क्षमे जगति जीवितुमीक्षितुं वा
यत्तत्र सा चरति गूढमथाप्यगूढम् ।
एकैकमत्र भुवनं भुवनाधिराज्ञ्याः
क्रीडैव सा तु भुवनातिगमातृमूर्तिः ॥४॥

यद्यद्भोक्तुं जीवितुं द्रष्टुं वा शक्यं तत्र सर्वत्र माता गूढमगूढं वा चरति ॥ उत्तरार्धेन एकैकमपि भुवनं महाशक्तेरेका क्रीडेत्याह । सा महाशक्तिस्तु विश्वातिगाया आदिशक्तेर्मूर्तिः ॥ इदं च विशदयत्युत्तरश्लोकेन ॥४॥

प्रत्येकमूर्तिरखिलातिगमादिशक्ते-
रेकैकमण्डमधितिष्ठति, तच्च तस्याः ।
दृष्टं च दृग्विलसिते हृदि शक्तिशोभा-
पूर्णे धृतं च जनितं विमलप्रमोदे ॥५॥

अखिलातिगमादिशक्तेः मूलशक्तेर्मातुरेकैकापि मूर्तिर्विश्वात्मिका महाशक्तिर्भवन्ती एकैकं ब्रह्माण्डमधितिष्ठति । तच्च ब्रह्माण्डं तस्याः महाशक्तेः दृष्टिप्रसारे प्रथमं सृष्ट्यर्थं ईक्षितम् । ततः सौन्दर्यसारसामर्थ्यमये हृदये सङ्गृहीतं, अन्ते स्वीये आनन्दे उत्पादितम् ॥५॥

आर्या

अथ बह्व्यः श्रीमातुः
सर्गे कक्ष्याः क्रमानुवर्तिन्यः ।
शक्तेर्भवन्ति दैव्याः
सोपानपदान्यनेकानि ॥६॥

यथा सौधे कस्मिंश्चित् एकस्या भूमिकाया उपरि अन्या भूमिका तदुपरि पुनरन्या एवं बह्व्यो वर्तन्ते, तथा सर्गे अस्यां सृष्टौ बह्व्यः कक्ष्याः सन्ति । क्रमानुवर्तिन्यः प्राप्तव्यवस्था इत्यर्थः ॥ सोपानपदानि ऊर्ध्वं गन्तुं अधश्चागन्तुं इति बोध्यम् ॥६॥

यद्भागास्तु वयं स्मो
व्यक्तस्यैतस्य भान्ति सर्गस्य ।
तुङ्गाग्रेऽतुलसच्चित्-
सम्मदशक्त्यात्मका लोकाः ॥७॥

यस्मिन् व्यक्तेऽस्मिन् सर्गे भागो येषां ते वयं, यस्मिन् सर्गे वयं वर्तामहे इत्यर्थः । तस्यैतस्य शिखरे सच्चिदानन्दशक्तिमयाः सन्ति लोकाः ॥७॥

येषु निरावृति नित्या
　　शक्तिर्माता विराजते सत्या ।
येषु च भूतान्यखिला-
　　न्यविकार्येऽजस्रमेकत्वे ॥८॥

जीवन्ति प्रसरन्ति च
　　वाग्विषयातीतनित्यपूर्णत्वे ।
सर्वाणि यानि धत्ते
　　निजबाहुभिरक्षितान्यम्बा ॥९॥

येषु लोकेषु निरावृति क्रियाविशेषणम् । अच्छन्ना विराजत इत्यर्थः । येषु च अखिलानि भूतानि अविकार्ये एकत्वे अजस्रं जीवन्ति प्रसरन्ति चेति योजयितव्यम् ॥ यानि सर्वाणि अम्बा निजबाहुभिरक्षितानि विधेयविशेषणम् । वाग्विषयातीत-नित्यपूर्णत्वे धत्ते ॥८,९॥

नेदीयांस्यस्माकं
　　विज्ञानमयानि सन्ति भुवनानि ।

सिद्धानि यत्र माता

विज्ञानात्मा महाशक्तिः ॥१०॥

तत्र कानिचिद्भुवनानि अस्माकं नेदीयांसि समीपतरवर्तीनि, सिद्धानि पूर्णानि निर्दोषाणि, यत्र माता महाशक्तिः विज्ञानात्मा विज्ञानं आत्मा प्रकृतिः स्वरूपं वा यस्याः सा, आस्ते इति वाक्यशेषः ॥१०॥

इच्छाशक्तेर्वीर्यं

दिव्यं सा भवति सर्वविज्ञायाः ।

प्रतिकार्यं ज्ञानस्य च

सरणौ सरणौ स्वतश्च सिद्धस्य ॥११॥

सा सर्वविज्ञाया इच्छाशक्तेर्दिव्यं वीर्यं भवति । सा उद्देश्यं, वीर्यं विधेयम् ॥ प्रतिकार्यं एकैकस्मिन्नपि कार्ये विषये श्रमेण विनैव सिद्धस्य ज्ञानस्य च वीर्यं भवतीति सम्बन्धः ॥११॥

सत्यस्य पदन्यासा—

श्चलनान्युदितानि तेषु भूतानि ।

सर्वाणि दिव्यमहस-
स्स्वात्मानः शक्तयश्च देहाश्च ॥१२॥

चलनानि उद्देश्यं सत्यस्य पदन्यासाः विधेयम् । एवं भूतानि उद्देश्यं दिव्यमहसः दिव्यज्योतिषः आत्मशक्तिदेहाः विधेयम् ॥१२॥

सर्वेऽपि तेषु भोगाः
अत्यच्छतरोर्मयः ।
गम्भीराश्च समुद्राः
सान्द्रानन्दस्य निरुपमानस्य ॥१३॥

भोगा अनुभवाःताननूद्य सान्द्रानन्दनिष्ठ-अपरिमितत्वद्योतकानि ऊर्मित्व-प्रवाहत्व-समुद्रत्वानि विधेयानि ॥१३॥

अस्माकं त्वावासे
प्राणान्नमनोमया इमे लोकाः ।
काममविद्यापद्या-
श्चित्तिवियुक्ताश्च मूलविश्लिष्टाः ॥१४॥

आवासे वासस्थले अस्मिन् जगति । काममत्यन्तम् । अविद्या-प्रचुराः पद्याः येषां ते लोकाः । चित्तिवियुक्ताः चिदेव चित्तिः तया वियुक्ताः । मूलाद्विश्लिष्टाः । अविद्यायां वर्तमाना इमे अन्न-मयादयस्त्रयो लोकाः स्वमूलाद्विच्छिन्नाः अत एव चित्स्वरूपात् पृथक्कृता इत्यर्थः ॥१४॥

**तेषामेषा धरणि-**
**र्व्यञ्जकमर्थस्य धाम कस्यापि ।**
**परिणामस्त्वेतस्याः**
**सरणिर्निर्णायिका भवति ॥१५॥**

तेषां लोकानामेषा धरणिः पृथ्वी कस्याप्यर्थस्य प्रयोजनविशेषस्य व्यञ्जकं प्रकाशकं साधकं वा धाम स्थानं भवति ॥ पृथिव्या वर्त-नस्य किमपि प्रयोजनमस्ति, येन साधितेन चरितार्थता स्यात्तस्याः ॥ का तर्हि तदर्थसाधिका सरणिः ? परिणाम इत्याह ॥ गूढार्थावि-ष्कारकः नियतक्रमः परिपाकविधिः परिणामस्य स्वरूपमिति बोध्यम् ॥१५॥

**तमसा व्याप्तामेतां**
**बहुलक्लेशां च बिभ्रती माता ।**

**प्रेरयमाणाऽऽपक्कां**
**नयति स्वीयां गतिं गूढाम् ॥१६॥**

एतां पृथिवीं, बहुलक्लेशां दुःखभूयिष्ठां, अपक्कां असिद्धां सिद्धिं प्रापणीयां ॥ एतादृशीं तमोव्याप्तां पृथिवीमपि माता गन्तव्यं स्वीयं लक्ष्यं प्रापयतीत्यर्थः ॥१६॥

**त्रैलोक्योपरि यत्तत्**
**सत्यं सृष्टिश्च जीवनं सत्यम् ।**
**अवतारयितव्यमिह**
**ज्योतिर्विज्ञानसंज्ञकं परमम् ॥१७॥**

अथ यदिहावतारयितव्यं येनावतारितेन पृथ्वी कृतार्था स्यात्, तत् त्रैलोक्यस्योपरि विज्ञानाख्यं दिव्यं ज्योतिः, सत्यं तत्र सृष्टिरूपेण वर्तते, सत्यमेव तत्र जीवनात्मना वर्तते। सत्यमुद्दिश्य सृष्टित्व-जीवनत्वे विधेये। सत्यसृष्ट्यात्मकं सत्यजीवनात्मकं तद् ज्योतिर्दिव्यमिहानेतव्यमित्यर्थः ॥१७॥

**विरतः क्रमशो नीचै-**
**र्बोधविहीनेऽत्र भौतिके द्रव्ये ।**

अन्यत उच्चैर्गच्छन्
  जीव-मनः-प्राणरूपसम्भेदात् ॥१८॥

अधिरूढात्मानन्त्यः
  सोपानपथोपमः स्थितो योऽसौ ।
अवरोढुं वा पुनर-
  प्यारोढुं च द्विधा सिद्धः ॥१९॥

चित्कक्ष्यात्मा विहितः
  सर्गेऽस्मिन् तत्र तत्र हितधामा ।
मर्यादाक्रमबन्धो
  महितो विद्भिर्महानेषः ॥२०॥

तन्नैकपदे हठादवतारयितुं शक्यम् । वर्तते च उपायः, न्याः ! स च चित्कक्ष्यात्मा मर्यादाक्रमबन्ध इति श्लोकत्रयेणाचष्टे ॥ अधस्तादिह बोधशून्ये जडवस्तुनि विरतः विश्रान्तः इतः रमप्यधोगमनस्यावकाशाभावात् । अन्यत ऊर्ध्वं गच्छन्, गमनक्रममाह । जीव-मनः-प्राणरूपसम्भेदात्, सम्भेदो विकासः, अन्नयात् पार्थिवरूपात् प्राणरूपविकासः परिणामक्रमफलितः, ततो

मनोविकासः, ततश्च जीवस्यान्तरात्मनो विकासः ॥ एवं विकास-द्वारेण अधिरूढात्मानन्त्यः अधिरूढं आत्मनः आनन्त्यं येन सः । अवरोढुं आरोढुं च द्विधा सिद्धः सोपानपथोपमः यः स्थितः असौ चित्कक्ष्यात्मा चित्कक्ष्याः चिन्मयभूमिकाः आत्मा स्वरूपं यस्य सः अस्मिन् सर्गे तत्र तत्र हितधामा हितानि विहितानि धामानि स्थानानि अन्नमयादीनि यस्य सः, मर्यादाक्रमबन्धः मर्यादा नियतव्यवस्था स्थितिः तस्याः क्रमः पौर्वापर्यनियमवान् तस्य बन्धः निर्मितिः ॥ अस्मिन् सर्गे अस्माल्लोकादूर्ध्वलोकानारोढुं ततश्चेहा-वरोढुं च चिन्मयभूमिकारूपा नियतस्थितिका क्रमविशेषानुसारिणी काचन रचना अस्ति, सैव बहुपदा पद्या, यया इत आरोह इव ततश्चावरोहः साध्यः ॥१८–२०॥

**अनयोरुभयोर्माता**
**मध्यस्थानं प्रकाशमध्यास्ते ।**
**याऽविद्यामयभुवन–**
**त्रितयाधिष्ठायिनी महाशक्तिः ॥२१॥**

उभयोः विज्ञानाख्यस्य सत्यज्योतिषः चित्कक्ष्यात्मकनिर्माणस्य प्रागुक्तस्य ॥२१॥

यत्संवेत्ति च पश्य-

त्यात्मन आवर्जयत्यथो तेन ।

भवितव्यं भुवनेऽस्मिन्

निश्चिन्वाना च भौमपरिणामे ॥२२॥

अध्यक्षा देवाना-

मास्ते माता समस्तकार्याणि ।

निर्वोढुं निजशक्ती-

र्निखिला व्यक्तीश्च निक्षिपत्यग्रे ॥२३॥

भौमिके परिणामे यद्भवितव्यं तत् प्रागेव वीक्ष्य, अनुभूय, आत्मनः किमपि निर्गमय्य दृष्ट्वा, इदमित्थं भवेदिति निर्णयं कुर्वाणा माता देवानामध्यक्षा आस्ते इति योजना ॥ समस्तकार्याणि निर्वोढुं निजशक्तीर्व्यक्तीर्निखिलाश्चाग्रे धुरि निक्षिपति स्थापयतीति पृथग्वाक्यम् ॥२२, २३॥

तत्सम्भूतिविशेषा-

नेषा नीचैस्तनेभ्य उरुवेषा ।

भुवनेभ्यः प्रहिणोति
प्राज्ञतमा कर्तुमेषु माध्यस्थ्यम् ॥२४॥

परिपालयितुमिमान्यथ
योद्धुं वा जेतुमेषु रक्ष्येषु ।
एषां युगानि नेतुं
परिवर्तयितुं च सुप्रथं काले ॥२५॥

सम्यक् प्रणेतुमथ च
व्यष्टीनामत्र भुवनशक्तीनाम् ।
परिपाटीश्च समष्टे-
र्व्यापाराणां सुविहितानाम् ॥२६॥

सम्भूतिविशेषान् स्वात्मनः प्रादुर्भूतान् मातुरंशविशेषान् । नीचैस्तनेभ्यो भुवनेभ्यः प्रेषयति । किमर्थम्? माध्यस्थ्यं कर्तुं मध्ये प्रविश्य साहाय्यं दातुम् । इमानि भुवनानि परिपालयितुं शासितुं, एषु भुवनेषु, सुप्रथं प्रकाशं क्रियाविशेषणम्, भुवन-शक्तीनां समष्टेर्व्यष्टीनां च व्यापाराणां परिपाटीः क्रमानुसारिणीः

सरणीः प्रणेतुं च । लोकशक्तीनां कार्यक्रमान् पार्थक्येन साकल्ये-
नापि निर्वाहयितुं चेत्यर्थः ॥२४-२६॥

मदलेखा

आविर्भावविशेषा एते सन्नुतवेषाः ।
रूपाणां बहुलानां मूर्तीनां च विशेषाः ॥२७॥

स्पष्टम् ॥२७॥

एष्वार्या भुवि भव्यै- र्भिन्नैर्नामभिरम्बाम् ।
दिव्येष्वर्चितवन्तः सन्तः सर्वयुगेषु ॥२८॥

एषु प्रादुर्भावेषु अधिष्ठानेषु मातरं नामभेदैर्मानुषा अपूजयन्
युगान्तरेष्वपि ॥२८॥

कार्याण्यादधतीभिः श्रीमात्रा विहितानि ।
आविर्भूतिभिराभिः साकं शक्तिभिरासाम् ॥२९॥

सर्वेशस्य विभूति- व्यूहस्येव निजस्य ।

आकारे मनुजन्म- प्रज्ञायाः श्रितबन्धे ।
विस्पष्टं च विधातुं दिव्यं स्वांशुविशेषम् ॥३१॥

शक्ताऽसौ प्रभवित्री सान्निध्यस्य निजस्य ।
शक्तेश्चापि गुणस्य स्थूलेऽस्मिन् भू-भुवने ॥३२॥

आभिराविर्भूतिभिः शक्तिभिश्च द्वारा ॥ सर्वेशस्य परमपुरुषस्य विभूतीनां शरीरमनांसि यथा परिकल्पयति, तथा स्वीयविभूतीनां शरीराणि मनांसि च निर्माति, तथा कृत्वा अस्मिन् स्थूले भूलोके मानुषप्रज्ञारूपे निजसान्निध्यशक्तिगुणानां स्वीयं अंशुविशेषं प्रकाशयितुं प्रभवति ॥ श्लोकचतुष्कं एकवाक्यतयान्वेतव्यम् ॥ अन्तिमश्लोकद्वयम्—स्थूलेऽस्मिन् भू-भुवने श्रितबन्धे मनुजप्रज्ञाया आकारे, असौ प्रभवित्री (कर्त्री) निजस्य सान्निध्यस्य (निजायाः) शक्तेः निजस्य गुणस्य च दिव्यं स्वांशुविशेषं विस्पष्टं विधातुं शक्ता ॥२९–३२॥

क्षोणीमण्डललीला- भूमीर्नाट्य इवाम्बा ।
निर्णीयापि विभाव्य प्रागेव स्वयमेषा ॥३३॥

सा वृन्दारकवृन्दै- र्विश्वैस्तत्र सहायैः ।
श्रीमाता मुख्यनटी प्रच्छन्ना नटति स्म ॥३४॥

क्षोणीमण्डलं भूमण्डलं तदेव लीला अनायासक्रियाविशेषः आनन्दबलविजृम्भितो विलासः, तस्याः लीलायाः भूमीः रङ्गस्थलानीत्यर्थः ॥ निर्णीय रचनाविषये निर्णयं कृत्वा, विभाव्य प्रयोगविधानं विचार्य । मुख्यनटी, मुख्यत्वं च नाटयितृत्वात् ॥

नाट्ये यथा रङ्गस्थलानि विरच्य पात्राणि यथोचितभूमिकापरिग्रहं कारयित्वा मुख्यनटः सूत्रधारः नाटयति, स्वयं च वर्णिकां परिगृह्य नटति, तथा श्रीमाता मुख्यनटी विश्वैर्बृन्दारकबृन्दैः सहायैर्युक्ता तान् नाटयित्वा स्वयं च नटति स्म ॥ नाटकं च भूमण्डले यद्भवितव्यं तत्सर्वम् ॥३३,३४॥

# ५

## मातुः सर्वभूतत्वं, व्यक्तित्वेनावतारश्च

आर्यावृत्तम्

उपरि न केवलमेषा
स्थिता समस्तं प्रशास्ति सर्वहिता ।
अवरतरे त्रैलोक्येऽ
प्यवरोहत्यत्र सम्मुखी माता ॥१॥

त्रैलोक्योपरि तस्य च अवतार्यस्य विज्ञानज्योतिषश्च उभयोर्मध्य-मध्यास्ते मातेति प्रागुक्तम् ॥ इदानीं न केवलमुपर्यास्ते; अविद्यायामन्न-प्राण-मनोमयेऽत्र त्रैलोक्येऽप्यवतरतीति वक्तुमारभते ॥१॥

व्यक्तित्वनिरुद्देशे
त्विह संवृतशक्तिसंस्थिता सैव ।

सर्वाणि च वस्तूनि

प्रवृत्तयश्चाप्यविद्यायाः ॥२॥

व्यक्तित्वनिरद्देशे, व्यक्तित्वं पृथक्त्वेन सत्त्वं ज्ञानवत्त्वं च तस्य निरुद्देशः अनिर्देशः तस्मिन् । तु अवधारणार्थकः । मातुर्व्यक्तित्वेऽनिर्दिष्ट एवेति यावत् । मातरि व्यक्तित्वदृष्टिं वर्जयित्वा साकल्येन तस्यां समष्टिदृष्ट्या विलोकितायां किं भवतीति चेदाह ॥ सैव संवृतशक्तिसंस्थिता संवृतायां प्रच्छन्नायां शक्तौ संस्थिता । सर्वाणि वस्तूनि अविद्यायाः प्रवृत्तयश्च चलनान्यपि सैव ॥ यां जडशक्तिं वदामः साऽपि अप्रकाशशक्तिस्था मातैवेत्यवगन्तव्यम् ॥२॥

सत्त्वह्रासेन तथा

सर्वाणि भवन्ति सर्जनान्यस्याः ।

सकलानि सकलमातुः

प्रकृतिशरीरं प्रकृतिशक्तिः ॥३॥

तथा एवमेव सर्वाणि वस्तूनि सत्त्वह्रासेन सत्त्वस्य सारभूतद्रव्यस्य उपादानभूतस्य ह्रासः न्यूनत्वं तेन सारांशलघीयस्त्वविशिष्टद्रव्येण साधितानि तस्याः सर्जनानि सृष्टानि वस्तूनि । इह अवि-

द्यामये जगति सृष्टानां पदार्थानां सारन्यूनता बोध्या ॥ ऊर्ध्वे विद्यामये प्रपञ्चे सारभूयिष्ठानि वस्तूनि, इह त्वधस्तात् सारन्यूनानि ॥ सृष्टौ इह वा अमुत्र वा न क्वापि समानसाराणि वस्तूनि । यद्यपि मूलद्रव्यं सर्वोपादानभूतं परं वस्त्वेकमेव, तथाऽपि तस्य नानाभावावस्थितियोग्यत्वात् तत्रैव भेदव्यञ्जकताबीजं द्रष्टव्यम् ॥ एवमिह मात्रा सृष्टानां वस्तूनां सारन्यूनतोपपन्ना भवति ॥

सकलानि उद्देश्यं प्रकृतिशरीरं प्रकृत्यात्मकं शरीरं विधेयम् । प्रकृतिशक्तिः प्रकृतिरूपा शक्तिश्च विधेयम् ॥३॥

**वर्तन्ते तानि, यतः**

**साऽविद्यासम्मितानि रूपाणि ।**

**आत्मानं चापि धर–**

**त्यवगुण्ठनवन्निगूढार्थम् ॥४॥**

यतः यस्मात् सा अविद्यासम्मितानि अविद्यानुगुण्येन परिच्छिन्नानि रूपाणि, अविद्यासम्मितं आत्मानं जीवव्यक्तित्वविशिष्टं च निगूढार्थं यथा तथा धरति, तस्मात् तानि प्रागुक्तानि वस्तूनि वर्तन्ते । मातुरविद्यानुरूपात्मरूपादिपरिग्रह एव तेषां वर्तनहेतुः । न चेत् तानि न स्युः ॥४॥

महतेऽध्वराय सम्मति-
मददादनुमोदमानैषा ।
परमस्य रहस्याज्ञा-
प्रचोदिता किमपि साधयितुम् ॥५॥

अध्वराय यागाय, लोके देवतामुद्दिश्य द्रव्यत्यागो याग उच्यते। स्वीयं धाम विहाय इह तमसि अवतरणमेव मातुर्महांस्त्यागः । तादृशे त्यागाय सम्मेने माता । कुतः? परस्यादेशेन प्रेरिता किमपि साधयितुम् । सर्वशक्तिकस्य निरवधिकस्य परस्य इदं साध्यमिदमसाध्यमिति कः कथयितुमीष्टे? तस्मात् किमपि परेणादिष्टं मातुरेव विदितं साधयितुमवतरति ॥५॥

सम्भवितुं योग्यानां
शक्यमनन्तस्य साधु यच्चासीत् ।
व्यक्तित्वनिर्व्यपेक्षं
सर्वं सा समभवज्जगद्धात्री ॥६॥

पूर्वश्लोके किमपीत्यनेन पूर्वार्धस्य सम्बन्धः ॥ अनन्तस्य परस्य वस्तुनः सम्भवितुं योग्यानां सम्भाव्यानां मध्ये यत् प्रकृतं साधु सम्यक् शक्यमासीदलक्ष्यत तत्किमपीति योजयितव्यम् ॥ एवं सा व्यक्तित्वनिर्व्यपेक्षं अपृथग्भावेन साकल्येन सर्वमभवत ॥६॥

व्यक्तित्वेनाप्येषा

महान्धकारेऽत्र तामसे जगति ।

अवनम्राप्यवरोढुं

यथेदमान्ध्यं समुन्नयेज्ज्योतिः ॥७॥

न केवलं व्यक्तित्वनिरपेक्षदृष्ट्या साकल्येन सैवेह सर्वमभूत् । किं तु व्यक्तिरूपेणाप्यवतरति । अवतारचिकीर्षितमाह चतुर्भिः श्लोकैः ॥

सत्त्वप्रधानो लोकः मनोलोकः, रजःप्रधानः प्राणलोकः । तमःप्रधानोऽयमन्नमयः स्थूलो भूलोकः ॥ अत्र तामसे जगति भूलोके इत्यर्थः । अवरोढुं अवनम्रा । यथा येनावरोहणेन इदमान्ध्यं जडनिमग्नचित्त्वं ज्योतिः समुन्नयेत् तथाऽऽवनम्रेति सम्बन्धः ॥ नयतेर्द्विकर्मकत्वात् आन्ध्यं प्रधानं कर्म ज्योतिरप्रधानं च ॥७॥

अनृतभ्रमात्मकेऽस्मिन्

यथा च तत् सत्यरूपतां गमयेत् ।

अथ मृत्यौ च यथा तं

परिणमयेद्दिव्यजीवनत्वेन ॥८॥

अनृतभ्रमात्मके असत्यभ्रान्तिमूलकदोषभूयिष्ठे अस्मिन् जगति यथा तदनृतात्मकं सत्यरूपत्वेन परिणमयेत् परिवर्तयेत् तथाऽवरोढुमवनतेति पूर्वेण सम्बन्धः ॥ एवं मृत्यौ च अवतरति तं दिव्यजीवनतया परिणमयितुमित्यर्थः ॥८॥

अपि च दुराग्रहशीले
दुःखे लोकार्तिशोकभूयिष्ठे ।
कारुण्यादवतर्तुं
प्रह्वीभूताऽभवन्माता ॥९॥

दुःखे जगद्दुःखे अवतर्तुं प्रह्वीभूताऽभवदिति सम्बन्धः ॥ तस्य प्रयोजनमुत्तरश्लोकेनाह ॥९॥

परिणमयितरि स्वीयो-
त्कृष्टानन्दस्य सम्मदोन्मादे ।
तमखिलजननी
दुर्भरमतिबहुलमन्तयेच्च यथा ॥१०॥

मातुः स्वीयानन्दलहरीणां हर्षोन्मादस्य परिणमयितृत्वात्, तत्र क्लेशं अन्तयितुं प्रभवति । यस्मिन् क्लेशे दुःखरूपे माता कारुण्यादवतर्तुं प्रह्वीभूताऽभवदित्युक्तं पूर्वश्लोके ॥१०॥

हंसमाला

उरुवात्सल्यभावा- न्निजवत्सेषु माता ।
सममंस्ताऽऽप्रकाशं परिधातुं च वेषम् ॥११॥

वत्सेषु स्वेषु वात्सल्याद्धेतोः अप्रकाशं वेषं परिधातुं अप्रकाश-वेषेणात्मानमाच्छादयितुमित्यर्थः । सममंस्त अङ्गीचकार ॥११॥

दधतीराक्रमाय व्यथयच्चेष्टितानि ।
अनृतध्वान्तशक्तीः प्रससादापि सोढुम् ॥१२॥

आक्रमाय दुराक्रमणार्थं व्यथयच्चेष्टितानि आर्तिजनककर्मविशे-षाणि दधतीः स्वीयत्वेन धारयमाणाः अनृतध्वान्तशक्तीः सोढुं प्रससाद अनुमतिरूपं प्रसादमकरोत् ॥१२॥

जननद्वारतो नि- र्गमनं स्वीचकार ।
जननं तत्सखायो निधनं वित्त भूयः ॥१३॥

नित्याऽऽमत्याऽऽयोनिजा भगवती अवताराङ्गीकारस्यावश्यकतया जननद्वारा विनिर्गमनमिह स्वीकृतवती ॥ तच्च जननं भूयो निधनं महन्मरणम् । कथम्? इह सर्वं मृत्युग्रस्तम् ॥१३॥

इति सत्यं प्रकाशं मुदमश्रान्तमायुः ।
अयमुद्धृत्य नेयोऽ- वरसर्गोऽभ्यलक्षि ॥१४॥

इति इत्थं मातुर्जननाङ्गीकरणादेव अयं अवरसर्गः अनृतान्ध्य-क्लेशबहुलः सत्यं प्रकाशं मुदं आनन्दं अश्रान्तमविरतं नित्यमिति यावत्, आयुर्जीवितं च (कर्म) उद्धृत्य नेयोऽभ्यलक्षि उद्धृतो भूत्वा ापयितुं शक्योऽदृश्यत ॥१४॥

सुमहानेष यज्ञः पुरुषस्येति केचित् ।
प्रकृतेर्भूरिहोमः क्रतुरग्र्यस्तु देव्याः ॥१५॥

एष यज्ञः पुरुषस्येति केचित् । पुर्वे वैदिकाः प्राहुः "यत्पु-षेण हविषा देवा यज्ञमतन्वत" इति ॥ तत्सत्यं भवतु । इह ातृतत्त्वे सम्यक् परिज्ञाते मातुः क्रतुरेवेति दृष्टिरुपपन्नतरा स्यादि-ाशयः । तु शब्दः उक्तपक्षं व्यावर्त्य स्वाशयं द्योतयितुम् ॥१५॥

# ६

## चतुर्मूर्तिप्रस्तावः

हंसमाला

अथ विश्वस्य सम्यङ्- नियतं चालनेऽस्य ।
व्यवहारे च लीला- पृथिवीमण्डलस्य ॥१॥

भगवत्याश्चतस्रो धुरि लब्धप्रतिष्ठाः ।
अभवन्याः कलास्ता वरशक्तीरवेत ॥२॥

श्लोकद्वयमेकवाक्यम् । विश्वस्य कर्मणि षष्ठी । नियतं चलनक्रियाविशेषणम् । लीलात्मकपृथिवीमण्डलस्य व्यवहारे च ॥ कलाः अंशाः, वरशक्तीः श्रेष्ठाः शक्तीः । अवेत अवगच्छथ । श्रोतॄन् प्रति सम्बोधनम् ॥१,२॥

परमा मूर्तयोऽमूः प्रमुखा लोकमातुः ।
जगतीकार्यनेत्र्यः प्रथमा तत्र राज्ञी ॥३॥

प्रमुखाः प्राधान्येनाग्रे स्थिताः ॥ तत्र तासु मूर्तिषु, प्रथमा आदौ कथिता, राज्ञी राजेश्वरी ॥३॥

वसन्ततिलका

सेयं विनिश्चलविशालतरा प्रशान्त-
भव्यप्रसादभरिता महिता महद्भिः ।
सर्वार्थधीः परमपारकृपारसार्द्रा
सर्वाधिराज्यमहिमाऽनुपमप्रभावा ॥४॥

इतः परं महेश्वर्यादिमूर्तीश्चतस्रः नामाख्यानमन्तरेण क्रमशः सङ्क्षेपेण विशिनष्टि ॥ सेयमिति प्रथमा महेश्वरी कथिता ॥४॥

मातुः समुज्ज्वलबलस्य च दुर्निवार-
रागस्य चण्डजवसोऽपि च वीरवृत्तेः ।
इच्छाबलस्य निखिलाक्रमणस्य लोक-
संक्षोभवीर्यविभवस्य च मूर्तिरन्या ॥५॥

मूर्तिरन्या महाकाली ॥५॥

सौन्दर्यसारलयसुस्वरसामरस्य-

आकर्षणेन च बलान्मधुरा तृतीया
हारिश्रियाऽद्भुतपरिस्फुटसुन्दरीयम् ॥६॥

सौन्दर्यादेर्गोप्येन रहस्येन चकारादुक्तेन सर्वेण मधुरा रमणीया, तृतीया महालक्ष्मीः हारिश्रिया मनोहरशोभया ॥६॥

अत्यन्तगाढनिपुणा परमे दृढे या
ज्ञाने च कर्मणि विदोषधृते तुरीया ।
सा भाति सर्वविषये निभृतं च याथा-
तथ्येन सिद्ध्यधिगमेऽपि च मातृमूर्तिः ॥७॥

परमे श्रेष्ठे ज्ञाने, विदोषधृते दोषराहित्येन कुशलतया धृते गृहीते कर्मणि च अत्यन्तगाढनिपुणा या तुरीया चतुर्थी सा मातृ-मूर्तिः महासरस्वती सर्वविषये याथातथ्येन सिद्ध्यधिगमे च भाति, अधिष्ठातृदेवतात्वेन राजते ॥७॥

ज्ञानं बलं समरसत्वमथापि सिद्धि-
रित्थं पृथग्गुणविशिष्टतया चतस्रः ।
ताः स्वात्मना सह गुणात्मकनैजशक्ती-
रेताः प्रकाशयितुमत्र समानयन्ति ॥८॥

ताः चतस्रो मूर्तयः, गुणात्मकनैजशक्तीः स्वस्वविशिष्टगुणरूपाः शक्तीः ज्ञानाद्याः ॥८॥

**मातुः प्रजागरितशक्तिसरस्य साक्षाद्**
**ये भौमिकीं विवृणुते प्रकृतिं निजां ताः ।**
**दिव्यास्पदे तदधिरूढपदानुरूपे**
**स्वाः स्थापयन्ति मनुजात्मविभूतिवर्गे ॥९॥**

मातुः मातृसम्बन्धिनः प्रजागरितशक्तिसरस्य प्रजागरितायाः उज्झितनिद्रायाः शक्तेः सरस्य चलनस्य व्यापारस्येति यावत्, ये स्वकीयां भौमिकीं भूमिसम्बन्धिनीं भूम्याश्रयणेन व्यवस्थितां प्रकृतिं साक्षाद् विवृणुते, मातृशक्तिव्यापाराय ये कृतिनः स्वस्यां प्रकृतौ स्थलं ददति, मनुजात्मविभूतिवर्गे मानुषाकारेण वर्तमाने मातृमूर्तिविभूतिवर्गे तदधिरूढपदानुरूपे तैः कृतिभिः अधिरूढस्य पदस्य स्थानस्य अनुरूपे सदृशे दिव्यास्पदे दिव्यस्थाने ताः मूर्तयः स्वाः उक्ताः ज्ञानबलाद्याः शक्तीः स्थापयन्ति, प्रकाश्य प्रतिष्ठापयन्ति ॥९॥

अनुष्टुप्

**महेश्वरी महाकाली महालक्ष्मीरथान्तिमा ।**
**महासरस्वतीत्यासां महन्नामचतुष्टयम् ॥१०॥**

# ७

## महेश्वरी

मदलेखा

पर्यालोचकबुद्धे- रिच्छाशक्तित ऊर्ध्वम् ।
आसीना विपुलात्मा वैशाल्योपरि राज्ञी ॥१॥

राज्ञी महेश्वरी ॥१॥

उत्कर्षं च बृहत्त्वं ते द्वे प्रापयति स्वम् ।
वैशाल्यात्मविवेका- कृत्या तेऽपि विधत्ते ॥२॥

ते द्वे पर्यालोचकबुद्धिं इच्छाशक्तिं च स्वीयमुत्कर्षं बृहत्त्वं च प्रापयति, तथा कृत्वा तयोः वैशाल्यविवेकस्वरूपतामापादयतीत्यर्थः ॥२॥

औज्ज्वल्येन परस्ता- दाहोस्वित्तत्र तयोः ।
आभाति प्रवहन्ती ब्रह्मिष्ठा शक्तिमती ॥३॥

आहोस्वित् अथवा, तत्र तयोः परस्तात्, तावप्यतीत्य तयोरप्यूर्ध्वमित्यर्थः । औज्ज्वल्येन स्वीयेन प्रवहन्ती आभाति । ब्रह्मिष्ठा प्राज्ञतमा । शक्तिमती ज्ञानमेवास्याः मुख्या शक्तिः ॥३॥

विज्ञानस्य विशिष्टा- नन्त्यानां बहुलानाम् ।
अस्मानुन्मीलयति प्राज्ञा विश्रुतवीर्या ॥४॥

ब्रह्माण्डस्य बृहत्त्व- स्योत्कृष्टस्य महिम्नः ।
दिव्यज्योतिष एषा निर्वेषस्य परस्य ॥५॥

निक्षेपाश्रयभूमे- र्ज्ञानस्याद्भुतभासः ।
शक्तीनाममितस्य श्रीमातुश्च सरस्य ॥६॥

विज्ञानस्य विशिष्टानन्त्यानां विज्ञानगतानां अगणितगुणगणज्ञानैश्वर्यतेजोबलादीनां इत्यर्थः तेषां अस्मानुन्मीलयति तेषामस्माकं चाभ्यन्तरीभूतध्वान्तनिवारणेन उभयेषां सम्बन्धविधायकं मार्गं विवृतद्वारं करोतीत्यर्थः । एवं बृहत्त्वस्येत्यारभ्य सरस्येत्येतदन्तं

उक्तस्य सर्वस्यास्मानुन्मीलयतीति वाक्यशेषः ॥ श्रीमातुः शक्तीनां शाश्वतीनां अमितस्य परिच्छेदरहितस्य सरस्य चलनस्य व्यापारस्येति यावत् ॥४-६॥

शान्तात्माऽद्भुतभूमा शश्वन्निश्चलधामा ।
गुर्वीयं नो किमपि प्रभ्वेनां चालयितुम् ॥७॥

इयं गुर्वी एनां चालयितुं किमपि नो प्रभु न समर्थम् ॥७॥

वैदुष्यं यदमुष्यां नित्यं स्थायि समस्तम् ।
गूढं किञ्चन नास्या यत्काङ्क्षत्यवगन्तुम् ॥८॥

यत् यस्मात् अमुष्यां वैदुष्यं समस्तं ज्ञानं स्थायि भवति, तस्मादस्याः गूढं अविदितं नास्ति किञ्चन यदवगन्तुं काङ्क्षति ॥८॥

सर्वं प्राणिसमूहं स्पष्टं वस्तु समस्तम् ।
सर्वास्तत्प्रकृतीर- प्येषां चालकहेतुम् ॥९॥

मर्यादां च जगत्या अस्याः कालविशेषान् ।
सर्वं यद्भवदेषा भूतं भव्यमवैति ॥१०॥

सर्वमवैतीति योजना ॥ तत्प्रकृतीः तेषां प्राणिसमूहसमस्त-वस्तूनां च प्रकृतीः । एषां प्राणिसमूहादितत्प्रकृत्यन्तानां चालक-हेतुं अवैति जानाति ॥ मर्यादां जगत्याः नियतिं व्यवस्थाविधिमिति यावत् । कालविशेषान् लोकस्य युगपरिवर्तक्रमान् ॥ भूतं भवत् भव्यं अतीतानागतवर्तमानानि ॥९-१०॥

वसन्ततिलका

**अस्यां बलं किमपि तिष्ठति यत्समस्तं**
**ईष्टेऽभिगम्य सकलस्य च सम्मुखीनम् ।**
**स्थातुं दुरालभविशालधियः प्रशान्त-**
**शक्तेश्च कोऽपि न पुरः प्रभुरन्ततोऽस्याः ॥११॥**

सम्मुखीनं धीरताद्योतकं बलं, दुरालभविशालधियः दुरालभा दुःस्पर्शा दुर्ग्रहेत्यर्थः विशाला च धीर्यस्यास्तस्याः । अन्ततः अन्ते, अस्याः पुरः अग्रे स्थातुं न कोऽपि प्रभुः ॥११॥

**देवी समा व्यवहरत्यविपर्ययेच्छा-**
**शक्तिः क्षमानिधिरसाविह मानुषेषु ।**
**तत्तत्स्वभावसदृशं घटनासु वस्तु-**
**जाते च तन्निहितसत्यबलानुरूपम् ॥१२॥**

समा निष्पक्षपाता, मानुषेषु तत्तत्स्वभावसदृशं वस्तुजाते घटनासु सम्भवेषु च तद्गतसत्यबलानुरूपं व्यवहरति ॥१२॥

पक्षानुरागविधुराऽऽनुसरत्यजस्रं
दक्षा परस्य पुरुषस्य परं निदेशान् ।
कांश्चित्समुद्धरति कांश्चिदधः करोति
स्वस्मादपास्यति तमस्यथवा महान्धे ॥१३॥

स्पष्टम् ॥१३॥

देवी ददाति महतीं मतिमत्तमेभ्यो
देदीप्यमानविभवां धिषणां विशिष्टाम् ।
ये दृष्टिसम्पदमिताः कृतिनः स्वमन्त्रे-
ष्वभ्यन्तरान्परममून्विदधाति माता ॥१४॥

दृष्टिसम्पदमिताः प्राप्ताः अन्तर्दृष्टिसम्पन्ना इत्यर्थः । अभ्यन्तरान् आन्तरङ्गिकान् ॥१४॥

विन्यस्यति द्विषति मातरमत्र लोके
विद्वेषयोग्यफलितानि जने वराके ।

मूढाश्च ये जडधियः कुधियश्च ये वा
तांस्तांस्तदान्ध्यमनुसृत्य नयत्यभिज्ञा ॥१५॥

मातरं द्विषति जने विद्वेषयोग्यफलितानि विन्यस्यति क्षिपति ॥१५॥

प्रत्येकमत्र मनुजं प्रकृतेर्विभिन्ने-
ष्वंशेषु युक्तमभिमृश्य तथैव तेषाम् ।
आवश्यकं फलमुदीर्णमथ प्रवृत्तिं
माताऽनुरुध्य परमुत्तरमादधाति ॥१६॥

मनुजं प्रकृतेर्विभिन्नेष्वंशेषु भागेषु प्रत्येकं पृथक् पृथक् युक्तं यथा तथा अभिमृश्य तथैव तेषामंशानां आवश्यकं अनिवार्यतया अपेक्षितं, उदीर्णं फलं आवश्यकत्वेन तैरुद्वीक्ष्याभ्यर्थितं, प्रवृत्तिं प्रेरणां च अनुरुध्य माता परमुत्तरमादधाति ॥१६॥

सङ्घट्टयत्यपि च तान्प्रकृतिप्रसारान्
आवश्यकं भवति यावदपारमेधाः ।
तल्लालितस्वरुचये त्यजति त्वविद्या-
मार्गे क्षयाय सकलाभ्युदयाय वैषा ॥१७॥

प्रकृतिप्रसारान् प्रकृत्यंशानां प्रसाराः व्यापाराः तान् । तल्लालितस्वरुचये तैः प्रकृत्यंशैर्लालिता प्रीत्या अभिलषिता स्वरुचिः स्वेच्छा तस्यै ॥१७॥

**तस्याः कुतोऽपि न विबन्धकमस्ति लोके**
**सङ्गो न वा यदखिलोपरि भासते सा ।**
**अन्यातिशायि हृदयं तु जगज्जनन्याः**
**कारुण्यमक्षयमनन्तमितं हि मातुः ॥१८॥**

तस्याः हृदयं तु जगज्जनन्याः लोकमातुर्हृदयं अन्यातिशायि अन्यहृदयान्यतिशेते । अनन्तमितं न अन्तेन अवधिना मितं अनन्तमित्यर्थः ॥१८॥

**सा द्वेषिणोऽप्यसुरराक्षसभूतवर्गान्**
**द्रोहात्मनोऽपि परिपश्यति तुल्यदृष्ट्या ।**
**एकस्य भागपदभाज इमे हि सर्वे**
**स्वीया भवन्ति शिशवो हितवत्सलायाः ॥१९॥**

भूतं पिशाचः । द्रोहात्मनः द्रोहः आत्मा स्वभावो येषां तान् । एकस्य अद्वितीयस्य सत्यस्य भागपदभाजः भागहरा इत्यर्थः ॥१९॥

अङ्गीकृतिर्भवति भाविनि तन्निरास-
स्तन्निग्रहोऽपि तदनुग्रह एव सत्यम् ।
प्रज्ञां तु नान्धयति सा करुणा महेश्याः
व्यावृत्तये न च कदाप्यनुशिष्टमार्गात् ॥२०॥

तन्निरासः तस्याः निरासः निराकृतिः कर्तरि षष्ठी, भाविनि भविष्यति अङ्गीकृतिरेव सा निराकृतिर्यदि प्रसक्ता । तस्मान्माभून्नैराश्यम् ॥२०॥

पादाकुलकम्

अस्या एकं परमं लक्ष्यं
तद्वस्तूनां तत्त्वं मुख्यम् ।
देव्याः शक्तेः केन्द्रं ज्ञानं
नास्ति ततः परमग्र्यं स्थानम् ॥२१॥

केन्द्रं मुख्यं स्थानम् ॥२१॥

अस्माकं प्रकृतेरिह भव्ये
यच्च स्वात्मन उदिते दिव्ये ।

सत्ये प्रादुर्भावनमस्या
अयमुद्योगोऽयं च नियोगः ॥२२॥

दिव्ये सत्ये अस्मत्प्रकृतीनां प्रादुर्भावनमस्या उद्योगो नियोगश्चेत्यर्थः ॥२२॥

## ८

### महाकाली

पादाकुलकम्

उत्तुङ्गत्वं न तु वैशाल्यं
नापि प्रज्ञाऽऽपि तु बलवीर्यम् ।
इत्थं गुणवैशिष्ट्याल्लक्ष्या
प्रकृतिस्त्वन्यैव महाकाल्याः ॥१॥

वैशाल्यं विशिष्टगुणो महेश्वर्याः, महाकाल्यास्तु उत्तुङ्गत्वं औन्नत्यम् । एवमाद्यायाः प्रज्ञा द्वितीयायाः बलवीर्यं च वैशिष्ट्ये बोध्ये । बलवीर्ययोः समाहारान्नपुंसकम् ॥१॥

वसन्ततिलका

अस्यां हि किञ्चिदखिलाक्रमणं घनत्वं
वीर्योत्कटं सकलसाधनशीलमूर्जः ।

भिन्दंश्च विघ्ननिवहानभिधाव्य सर्वाः
सीमाश्च दिव्यमहिमोद्धतचण्डभावः ॥२॥

घनत्वं वर्तत इत्यध्याहार्यम् । किञ्चित् किमपि एवं ऊर्जश्च वर्तते । उभयोश्च विशेषणानि स्पष्टानि ॥ विघ्ननिवहानभिधाव्य सर्वाः सीमाश्च अवधीन् भिन्दन् दिव्यमहिमा उद्धतचण्डभावो वर्तत इति शेषः ॥२॥

शार्दूलविक्रीडितम्

झञ्झामारुतचण्डकृत्यविभवे
तस्याः स्फुटो भ्राजते
सर्वो दैवतभाव उत्प्लुतगतिः,
सा ह्याशुतायै स्थिता ।
सद्यः सिद्धिकृते समर्थविधये
क्षिप्रं समक्षं परा-
घातायाऽऽप्रतिरुद्धविक्रमधृते
धुर्यप्रहाराय च ॥३॥

प्रचण्डमारुतकृत्योपमायां साहसकार्यसम्पत्तौ तस्याः दिव्यभावः सार्वात्म्येन हठाद्विजृम्भत इति तात्पर्यम् ॥ हि यतः सा आशुतायै क्षिप्रकारित्वाय स्थिता । मान्द्यं न सहते ॥ धुर्यप्रहाराय धुरि स्थितः धुर्यः अग्रे आभिमुख्येन दीयमानः प्रहारस्तस्मै ॥३॥

**आस्यं घोरमथासुरस्य कुमते-**
**स्तस्याः स्थितिर्मानसी**
**निष्कारुण्यमनर्थकृद्दृढतरं**
**देवद्विषां संहतेः ।**
**युद्धात्सङ्कुचिता कदापि न हि सा**
**योद्ध्री जगत्सन्ततेः**
**नासम्पूर्तिमितां दशां च सहते**
**मर्त्येष्वमर्त्येश्वरी ॥४॥**

तस्याः मानसी स्थितिः, नेयं केवलं मनोवृत्तिः किं तु अवस्थाविशेष इति वक्तव्यम् । देवद्विषामसुराणां संहतेः, निष्कारुण्यं यथा तथा अनर्थकृदपायकरीत्यर्थः । असम्पूर्तिमितां पूर्तिं न गतां दशां न सहते । अपूर्णतां न क्षमत इति भावः ॥४॥

यद्यन्नेच्छति तत्र तत्र मनुजे
सा निष्ठुरं चेष्टते
यद्यद्वाऽऽग्रहतोऽज्ञमान्ध्यकलितं
तत्र त्वसौ दारुणा ।
द्रोहासत्यसुदुर्मनस्त्वदमने
सद्यो रुषा भीषणा
दुष्टेच्छा च तदीयकर्कशकशा-
घातप्रविद्धा क्षणात् ॥५॥

आग्रहतः आग्रहेण मौर्ख्यग्राहम् । सद्यो रुषा भीषणा तत्क्षणाद्रोषेण घोरा ॥५॥

औदासीन्यमतिप्रमादभरितो-
पेक्षालसत्वानि सा
दिव्ये कार्य उपस्थिते भगवती
न क्षाम्यति क्षिप्रगा ।
आलस्येन विलम्बिनं जनमथा-
काले च सुप्तं व्यथां

तीव्रामाशु विधाय बोधयति साऽ-
प्यावश्यकी चेद्ध्रुवम् ॥६॥

सुप्तं जनं तीव्रां व्यथामाशु विधाय बोधयति । साऽऽपि तीव्रा व्यथापि आवश्यकी चेत्, नान्यथा ॥६॥

निर्व्याजाञ्जससत्वराः सपदि याः
कृत्योन्मुखाः प्रेरणाः
निःशेषाः परमप्रपूर्णगतयो
राजन्ति यास्तीव्रगाः ।
उत्काङ्क्षोर्ध्वगतिश्च या हुतवह-
ज्वालोपमा ज्वालिनी
सर्वास्ताश्चलनानि कान्यपि महा-
काल्या इति ज्ञायताम् ॥७॥

निर्व्याजाञ्जससत्वराः अकृत्रिम-अवक्र-शीघ्राः । उत्काङ्क्षा अभीष्टमुन्नतमर्थं उद्गम्य प्राप्तुं तीव्रेच्छा । हुतवहज्वालोपमा अग्नि-ज्वालाभा ऊर्ध्वगतिसादृश्यात् । ज्वालिनी ज्वाला अस्या अस्तीति

ज्वालिनी उत्काङ्क्षा । ज्वाला च पावनी पावकशक्तिः तद्वती, तस्मान्न पुनरुक्तिः ॥७॥

सत्त्वं दुर्दमुच्चदूरगमना
देव्याः परा दृष्टिरुत्-
तुङ्गोड्डीनपतङ्गराजपतना
शक्तिश्च सङ्कल्पगा ।
पादावूर्ध्वगतावतिद्रुततरौ
हस्तौ प्रसार्य स्थितौ
हन्तुं वा परिरक्षितुं यदियम-
प्यम्बा महाकालिका ॥८॥

परा दृष्टिः न तु अपरा, उपरि स्थिता ऊर्ध्वगेत्यर्थः । सङ्कल्पगा शक्तिः इच्छाशक्तिः । यत् यस्मात् महाकालिका इयमप्यम्बा, तस्मात्परिरक्षितुं वा हस्तौ प्रसार्य स्थिताविति सम्बन्धः ॥८॥

प्रीतिः सान्द्रतरा रुषेव, गहनः
स्नेहस्त्वतीवोत्कटः

तस्याः कार्यवशानुमोदितकरो-
पात्तप्रवृत्तेर्बलात् ।
प्रत्यूहाः प्रतिरोधकाश्च बहवो
भक्तस्य संस्तम्भकाः
सर्वे निर्विषया इवेह रिपवो
भग्ना भवन्ति क्षणात् ॥९॥

कार्यवशानुमोदितकरोपात्तप्रवृत्तेस्तस्याः बलात् प्रत्यूहाः भग्नाः भवन्तीति योजना । कार्यवशादस्माभिरनुमोदिता करेणोपात्ता गृहीता प्रवृत्तिः कार्यप्रवेश इत्यर्थः यस्याः तस्याः । कार्ये तस्याः प्रवेशः अस्माभिरनुमतश्चेत्, तस्याः बलात् प्रभावात् प्रत्यूहाः भग्नाः भवन्ति ॥ निर्विषयाः निःसत्त्वाः ॥ निर्विषया इवेह रिपव इत्यत्र श्लिष्टोपमामूलको भावध्वनिः । विषयशब्दस्य देशपर्यायत्वात् । आङ्गलमूलग्रन्थे नायमभिप्रेतः, तस्मादिहाकिञ्चित्करः ॥९॥

क्रोधः शत्रुजनस्य भीकरतमः
सङ्घट्टनोच्चण्डता
भीरोः क्षीणबलस्य वेदनकरी
यद्यप्यमुष्यास्तथा ।

आत्मन्यग्र्यतरानुरागहृदयै-
ध्याता महद्भिस्तथा-
प्यार्यैस्सादरमम्बिका भुवि महा-
सत्त्वैः समाराध्यते ॥१०॥

यद्यप्यमुष्याः क्रोधः शत्रुजनस्य भीकरतमः, तथा तेनैव प्रकारेण सङ्घट्टनोच्चण्डता भीरोर्वेदनकरी, तथापि आर्यैः समाराध्यत, इति सम्बन्धः ॥१०॥

तेषां संविदितं यदात्मगमभि-
द्रोहात्मकं यच्च त-
ज्ज्ञेतुं शक्तिसमग्रसत्यपदवीं
सम्मर्दयत्यम्बिका ।
भूयो यद्विकृतं च वक्रमखिलं
तच्चाञ्जसं ताडय-
त्युद्धृत्यापहरत्यशुद्धमखिलं
दोषार्दितं वा पुनः ॥११॥

तेषां पूर्वोक्तानां महासत्त्वानां संविदितं अनुभवविदितम् ॥
यच्च यदपि आत्मगं अभिद्रोहात्मकं तत् (कर्म) शक्तिसमग्रसत्यपदवीं नेतुं अम्बिका सम्मर्दयतीति यत् तत्संविदितमित्यन्वयः ॥

अञ्जसं ऋजु यथा तथा ताडयति ॥११॥

नैषाम्बा यदि, वत्सरैः शतमितै-
निर्वर्तनाय क्षमं
स्यादेतद्, यदुपस्थितेन दिवसे-
नैकेन निर्वाह्यते ।
मुक्त्वैतां मृदुलो गुरुश्च मधुर-
श्चारुः पृथुर्वा भवे-
दानन्दो वियुतस्तु सम्मदभरे-
णात्यन्तमुज्ज्वालिना ॥१२॥

शतमितवत्सरसाध्यं एकदिवससाध्यं भवति महाकाल्यनुग्रहात् ॥
आनन्दस्य उज्ज्वलत्वादिसमृद्धिमत्त्वं इह वैशिष्ट्यं ज्ञेयम् ॥१२॥

ज्ञानाय प्रददाति जित्वरतरां
शक्तिं महाकालिका

सौन्दर्याय च सामरस्यगतये
सर्वोत्तरामुन्नतिम् ।
सिद्ध्यर्थं कृतकृच्छ्रदीर्घविधये
यत्नाय वेगं परं
यः शक्तिं बहुलीकरोति लघय-
त्यध्वानमारादपि ॥१३॥

सिद्ध्यर्थं कृतकृच्छ्रदीर्घविधये यत्नाय, सिद्धिनिमित्तं कृतः कृच्छ्रसाध्यः दीर्घविधिः दीर्घकालनिर्वर्त्यविधानक्रमः यस्मिन् तस्मै यत्नाय वेगं ददातीति वाक्यशेषः ॥ यः वेगः शक्तिं बहुलीकरोतीत्यादि स्पष्टम् ॥ आरादपि दूरादपि ॥ दूरमप्यध्वानं लघूकरोतीति भावः ॥१३॥

पादाकुलकम्

उत्तमहर्षजडोन्मादेभ्य-
स्तुङ्गतमोत्तमशृङ्गपदेभ्यः ।
शस्तोदारतरोद्देशेभ्यो
विपुलतमेभ्यो दृष्टिपथेभ्यः ॥१४॥

एभ्यः किञ्चिन्न्यूनं किमपि
प्रीणयतीमां नैव कदापि ।
तस्मादस्यां सर्वेशस्य
ज्वलति विजित्वरशक्तिर्नित्यम् ॥१५॥

एभ्यः पूर्वश्लोकोक्तेभ्यः किञ्चिन्न्यूनं किमपि इमां न प्रीणयति ॥ अन्यत् स्पष्टम् ॥१४-१५॥

वरमधुना यदि महती सिद्धि-
र्न तु पुनरुत्तरकाले साध्या ।
कालीज्वलनात्युत्कटवेगा-
नुग्रहतः स्यादिदमिति सत्यम् ॥१६॥

नैषाम्बा यदि वत्सरैः शतमितैरिति श्लोकेचायमाशयो द्रष्टव्यः ॥१६॥

९

## महालक्ष्मीः

पादाकुलकम्

केवलमिह न प्रज्ञाशक्ती
एते मातुः स्वाभिव्यक्ती ।
प्रकृतावस्ति तु किञ्चित्तस्याः
सूक्ष्मतरं तद्भवति रहस्यम् ॥१॥

मातुर्विशिष्टप्रज्ञा महेश्वर्यां मूर्ता, विशिष्टबलं तु महाकाल्यामित्युक्तम् । न केवलं ते उभे एव मातुर्माहाभाग्यप्रकाशिके । अन्यदस्ति रहस्यं तस्याः प्रकृतावित्याह ॥१॥

येन विना न ज्ञानं पूर्णं
न स्यादपि सा शक्तिः पूर्णा ।

पूर्णत्वं वा पूर्णं न भवेत्
तद्धि विचित्रं विदितं महताम् ॥२॥

येन रहस्येन विना ज्ञानस्य शक्तेर्वा पूर्णत्वं न सिद्ध्यति ॥२॥

उभयोरुपरि प्राप्तस्थानं
शाश्वतसौन्दर्यस्य निधानम् ।
दिव्यानां समरसभावानां
भाति रहस्यं न पुनर्ग्राह्यम् ॥३॥

तच्च रहस्यं उभयोः प्रज्ञाशक्त्योरुपरि ॥३॥

एतद्बलवन्मोहनमन्त्रोऽ-
प्रतिहतविश्वाकृष्टिसमर्थः ।
वस्तूनि च भूतानि च शक्ती-
राकृष्य दृढं धारयमाणः ॥४॥

एकत्र समागतिमेतेषां
एकीभवनं च तथा कुरुते ।

पश्चादावरणान्तर्गूढा-
नन्दः स्वीयप्रतिमाः सर्वैः ॥५॥

एतैर्नैजलयांश्च प्रणयन्
विलसेच्च यथा विश्वविलासी ।
एषैव महालक्ष्मीदेव्याः
शक्तिर्माहात्म्यवती दिव्या ॥६॥

सार्धश्लोकद्वयमेकवाक्यम् ॥ एतद्रहस्यमुद्देश्यं बलवन्मोहनमन्त्रः विधेयम् । अप्रतिहतायां विश्वाकृष्टौ समर्थः सम्मोहनमन्त्रस्य विश्व-माकृष्टुमप्रतिद्वन्द्वि सामर्थ्यमित्यर्थः । स च वस्तूनि भूतानि शक्ती-श्चाकृष्य दृढं धारयमाणः सन् एतेषां वस्त्वादीनां एकत्र समागतिं एकीभवनं च तथा कुरुते, यथा विश्वविलासी पश्चादावरणान्त-र्गूढानन्दः एतैः सर्वैः स्वीयप्रतिमाः नैजलयांश्च प्रणयन् विलसेदिति सम्बन्धः ॥ पश्चादावरणेत्यत्रेदं बोध्यम् ॥ यथा आवरणत्वेन स्थितानां बाह्यानां वस्तूनां भूतानां शक्तीनां च पश्चादन्तर्निगूढो य आनन्दः स एतान्येव वस्त्वादीन्युपादाय स्वीयलोकोत्तररसगर्भितबिम्बानि प्रणीय स्वानुगुणलयांश्च विधाय विलसेत्, तथा सर्वेषामुक्तानां एकत्र समागमं कुरुते तत् सम्मोहनमन्त्रत्वेन कीर्त्यमानं रहस्यमित्या-शयः ॥

लयाः—नृत्त-गीत-वादित्राणां सामरस्यव्यवस्थापिकाः मात्राविशेषाः लयशब्दव्यवहार्याः। इह तु आनन्दाद्रसपदवाच्यादुत्पाद्यमानानां वस्त्वादीनां यथाकालदेशप्रमाणं समत्वापादिकाः मात्राविशेषाः लयशब्देन ग्राह्याः॥ आनन्दस्य सर्वाधारभूतत्वे रसत्वे चेदं हि श्रूयते "रसो वै सः, रसं ह्येवायं लब्ध्वानन्दी भवति। को ह्येवान्यात्कः प्राण्यात्? यदेष आकाश आनन्दो न स्यात्, एष ह्येवानन्दयति" इति ॥४–६॥

वसुमती

चेतस्तनुभृता- माकर्षति बला- ।
न्नातोऽधिकतरा या काचन कला ॥७॥

कला अंशविशेषो मूर्तिरिति यावत् ॥७॥

अल्पस्य पृथिवी- तत्त्वस्य भुवने ।
लक्ष्येत बृहती दूरा भगवती ॥८॥

अम्बा किल महे- श्वर्यार्यमहिमा ।
दुर्गा न सुभरा नैश्चल्यपरमा ॥९॥

उभाभ्यां श्लोकाभ्यां महेश्वरी दूरा न सुगमेत्युक्तम् ॥८–९॥

मन्दस्य पृथिवी- सत्त्वस्य भुवि नः ।
दौर्बल्यवशतः सोढुं न सुलभा ॥१०॥

एषाऽपि च महा- काली गुरुबला ।
घोरातिजवना दुर्धर्षगमना ॥११॥

द्वाभ्यां महाकाली दुर्भरेत्यत्र हेतुरुक्तः ॥१०-११॥

सर्वो ननु महा- लक्ष्मीं तु भजते ।
हर्षादभिमुख- स्तस्यै स्पृहयते ॥१२॥

तत्रं मधुभरं दिव्यं मदकरम् ।
मत्रं विसृजति ह्येषा मधुमती ॥१३॥

महालक्ष्म्याः स्पृहणीयत्वे हेतुः कथितः ॥१२-१३॥

तूणकम्

मातृमूर्तिरुत्तमप्रमोदशालिनी हि सा
वर्तनं तदन्तिके घनं सुखं मनोऽतिगम् ।
दीपिते हृदन्तरे तदीयवेदनाश्रिते
सत्त्वमद्भुतं परं प्रहर्षणं च जायते ॥१४॥

हि हेत्वर्थे । सत्त्वं वर्तनम् ॥१४॥

रम्यताप्रसन्नतार्द्रचित्तताास्ततो वह-
न्त्यर्कतो यथा विभास्तदद्भुतेक्षितं त्वथ ।
यत्र सक्तमुल्लसत्स्मितश्रियं च सा क्षिप-
त्येष बन्धितो गतस्त्वगाधमोदमग्नताम् ॥१५॥

यथा भास्कराद्विभाः त्विषः स्वभावतः प्रवहन्ति, तथा तस्याः रम्यतादयः । अथ यत्र यस्मिन् तस्याः अद्भुतवीक्षितं सक्तं लग्नं, यस्मिंश्च सा उल्लसत्स्मितश्रियं मन्दहासशोभां क्षिपति, सः बन्धितः बन्दीकृतः जीवः अगाधानन्दमग्नो भवति ॥१५॥

लोहकान्तसन्निभस्तदीयपाणिपल्लव-
स्पर्श एष यस्य सूक्ष्ममर्मविज्ञकर्मणा ।
प्राणदेहचेतसां परिष्कृतिस्तदङ्घ्रितः
पीडनेन च क्षरन्त्यलौकिकौघसम्मदाः ॥१६॥

यस्य स्पर्शस्य सूक्ष्मरहस्यज्ञात्रा कर्मणा शरीर-प्राण-मनांसि परिष्कृत्य स्वच्छानि कृतानि भवन्ति ॥ तदङ्घ्रितः पीडनेन, तस्याश्चरणकृतसङ्घट्टनेन हेतुना लोकातिशायिनः प्रवाहरूपा आनन्दा आनन्दलहर्य इति यावत्, संक्षरन्ति ॥१६॥

प्रमाणिका

सुखेन साधितुं तथापि न क्षमं तदीप्सितम् ।
सुखेन गोपनं न वा तदीयसन्निधेर्मतम् ॥१७॥

तथापि तत्प्रीणनं तत्सान्निध्यरक्षणं वा न सुलभम् ॥१७॥

तूणकम्

सुन्दरत्वसामरस्यमात्मचेतसोर्धृतं
धीप्रवृत्तिभावयोः समस्तयोस्तथाविधम् ।
बाह्यवृत्तिकार्ययोस्तथैवजीवतद्गत-
प्रान्तयोश्च तद्द्वयं महाश्रियः समीहितम् ॥१८॥

सुन्दरत्वसामरस्यं, उभयोः समाहारः, नपुंसकम् । समस्तयोर्धीप्रवृत्तिभावयोः, धीवृत्तिर्मानसी क्रिया, भावः अनुभवो हर्षादिः । उभयोस्तथाविधं सौन्दर्यसामरस्यम् ॥ बाह्यवृत्तेः कार्यस्य चोभयोः । जीवस्य तद्गतप्रान्तस्य च परितो वर्तमानस्य प्रदेशस्य चोभयोः । एवं सर्वत्र तद्द्वयं सौन्दर्यसामरस्यं महाश्रियो महालक्ष्म्याः समीहितम् ॥१८॥

शार्दूलविक्रीडितम्

योगो यत्र जगन्निगूढपरमा-
नन्दानुबद्धैर्लयैः
सम्बुद्ध्यात्मकसर्वसुन्दरपरा-
ह्वानस्य यत्रोत्तरम् ।
यत्रैक्याद्विरोधभावहर्षितै-
र्देवोन्मुखैर्जीविभि-
र्भूयन्ते भुवि तत्र सा भगवती
स्थातुं हि सम्मन्यते ॥१९॥

यत्र यस्मिन् स्थले जगति निगूढः य आनन्दः तेनानुबद्धैस्तदीयानुषङ्गिकैर्लयैर्मात्राविशेषैः योगः सम्बन्धः आकर्षणरूपः वर्तत इति शेषः ॥ यत्र चोत्तरं भवति विश्वात्मसुन्दरवस्तुकृतस्य आह्वानस्य । अयमाशयः । यथा परं वस्तु सर्वज्ञं सर्वशक्तं तथा तत्सर्वसुन्दरमपि । आनन्दस्वरूपाद्विश्वोत्पत्तेर्विश्वस्य रसनीयत्वं तत्र परस्य सौन्दर्याविर्भावादिति बोध्यम् । सम्बोधनस्वरूपं विश्वरूपेण विलसितस्य सुन्दरस्य (कर्तुः) आह्वानम् । इदं च तस्य प्रत्युत्तरम् । विश्वस्मिन्नाविष्कृतेन सौन्दर्येणाकृष्टं रसिकं संस्कृतं सूक्ष्मं चक्षुर्येषां त एव प्रत्युत्तरदानसमर्थाः सुन्दरवस्त्वाह्वानस्य ॥१९॥

यन्नीचं मलिनं निकृष्टमथ यद्
रिक्तं जघन्यं शठं
यद्ग्राम्यं पशुवन्निवर्तयति तत्
सर्वं तदभ्यागतिम् ।
सौन्दर्यं प्रियता च नैव भवतो
यत्राथवा ते उभे
प्रादुर्भूतिपराङ्मुखे विमनसौ
नायाति तत्रापि सा ॥२०॥

तत्सर्वं कर्तृ । देव्या अभ्यागमनस्य प्रत्याख्यायकानि नैच्यादीनीत्युक्तम् ॥ २०॥

एते यत्र विमिश्रितेऽथ विकृते
नीचार्थसंसर्गतः
प्रस्थातुं तत ईश्वरीसुमनसां
क्षिप्रं परावर्तते ।
ईर्ष्याद्वेषसुदुर्मनस्त्वकलुष-
स्वार्थेष्वसूयाकुले-

ष्वार्या लब्धनिकेतना नृहृदये-
ष्वेषा कथं स्थास्यति ॥२१॥

दोषकलुषितेषु मानुषहृदयेष्ववकाशो नास्त्यस्याः ॥२१॥

लोभद्रोहकृतघ्नताः स्थितिमिताः
पात्रे पवित्रे यदि
भ्रष्टाऽश्लीलसमीहितेन हृदयाद्
रागेण भक्तिर्यदि ।
किं नु स्थास्यति तादृशेषु हृदये-
ष्वेषा मनोज्ञाऽपि तु
ग्रस्ता दिव्यजुगुप्सया न हि दृढं
यत्ता निवृत्ता भवेत् ॥२२॥

अश्लीलसमीहितेन रागेण हेतुना हृदयाद् भक्तिर्भ्रष्टा यदि ॥ न हि दृढं यत्ता, हि हेत्वर्थे । नेयं निर्बन्धशीलेत्यर्थः । तदेवोत्तरश्लोकेनाह ॥२२॥

निर्बन्धान्न यतः कुतोऽपि यतते
माता मनोहारिणी

प्रागात्मीयशिवङ्करार्थघटना-
मूलात्तु सैवं स्थिता ।
एतत्तिक्तविषोपमस्य शमनं
पैशाचवद्वस्तुनः
धृतिं चाप्यनुपाल्य संवृतमुखी
कालं समुद्वीक्षते ॥२३॥

प्रागात्मीयेत्यस्य, स्वीयनूतनरचनासिद्धेः पूर्वमित्यर्थः ॥ सैवं स्थिता वक्ष्यमाणप्रकारेण । ईर्ष्याद्वेषादिदोषादेः प्रागुक्तस्य विषोपमत्वं पैशाचविभूतित्वं चोक्ते । तन्निवृत्तिकालं प्रतीक्षमाणा मुखमावृत्य तिष्ठतीति तात्पर्यम् ॥२३॥

नैतस्याः प्रियता विरक्तिभवयोः
पारुष्यरिक्तत्वयो-
रुद्गाढस्य हृदुद्गतस्य दमने
भावस्य वा भूरिणः ।
सौन्दर्यांशनिरोधनं न सहते
जीवस्य वा जीविनः

प्रेम्णैषा वरशोभया ननु गले
योक्त्रं निधत्ते नृणाम् ॥२४॥

वैराग्यजन्ये कार्कश्ये अकिञ्चनत्वे च नास्याः प्रीतिः । हृद-योद्गतस्य हर्षादेर्भावस्य दमने वा । जीवस्य जीवितस्य, जीविनः जीवत आत्मन इत्यर्थः । गले योक्त्रं निधत्ते, सौन्दर्येण प्रेमपाशेन च बद्ध्वा वशयति मानुषानित्यर्थः ॥२४॥

उत्कृष्टेष्विह जीवितं रसभरं
सर्गेषु तस्याः परं
नव्यं दिव्यकलासमृद्धिकलितं
सर्वं समापद्यते ।
काव्यं सत्त्वमिदं समस्तममला-
नन्दात्मकं जायते
श्रेष्ठायै स्थितये च साऽथ घटय-
त्येकत्र लोकश्रियः ॥२५॥

इदं समस्तं सत्त्वं सत्ता, यद्यदस्ति तत्सर्वमपि जगत् अमलान-न्दात्मकं काव्यं जायते ॥ काव्यमिव जगदपि रसगर्भितं चर्वण-क्षमं भवति ॥२५॥

स्वात्मोच्छ्वासनिवेशनान्नयनव-
त्येकत्वसन्दर्शनात्
सामान्यानि च केवलान्यपि करो-
त्याश्चर्यकारीण्यसौ ।
ह्यङ्गीकृतसन्निधिस्तु विमलां
बुद्धिं समुद्धृत्य या
वैचित्रीशिखराण्यनुत्तमपदा-
न्युच्चैर्नयत्यम्बिका ॥२६॥

नयनवती नयनं सौन्दर्यरसिकं चक्षुः अस्या अस्ति ॥२६॥

सर्वज्ञानातिगानि प्रकटयति मुदो-
न्मादगोप्यानि बुद्धे-
र्भक्तैर्दैवाभिमुख्ये प्रबलतरसमा-
कर्षणं चापि धत्ते ।
शक्तेर्वीर्यस्य चैषा निभृतघनतरे
कार्यसामर्थ्यभेदे

शास्ति श्रीमातृमूर्तिर्लयमपि च यथा-
सामरस्यप्रमाणम् ॥२७॥

मुदोन्मादगोप्यानि हर्षोन्मादरहस्यानि बुद्धेः प्रकाशयति । भक्तेः दैवाभिमुख्ये विषये बलवत्तरसमाकर्षणं धत्ते ॥ शक्तेर्वीर्यस्य च मात्रानुसारेण कार्यसामर्थ्यमध्यापयति, येन तत्कृतानि कार्याणि उचितं प्रमाणं सामरस्यं च नातिक्रामन्तीत्यर्थः ॥२७॥

प्रमाणिका

मनोज्ञतां ददात्यसौ मनोरमाऽथ सिद्धये ।
स्थिरत्वसाधिकां च काश्चिदुत्तमार्थसम्पदे ॥२८॥

सिद्धये कार्ये पूर्णे फलिते या सिद्धिस्तस्यै । तादृशीं मनोज्ञतां ददाति यादृश्या सिद्धिः शाश्वती स्थिरा स्यादित्यर्थः ॥२८॥

## १०

### महासरस्वती

महासरस्वतीमूर्तिर्मातुः शक्तिः क्रियापरा ।
सिद्धिव्यवस्थानिरतं मातुः सत्त्वं च या मता ॥१॥

महेश्वर्यादिमूर्तीनां कार्यभेदस्य तारतम्यपरिज्ञानेन महासरस्वत्याः कार्यं सुगमं स्यादिति अनुष्टुबष्टकेन तासां पृथग्व्यापारान् विशदयति ॥१॥

या कनिष्ठा चतसृणामत्यन्तं कार्यकौशला ।
भौतिकप्रकृतेरेषा नेदिष्ठा श्रेष्ठकारिणी ॥२॥

नेदिष्ठा अत्यन्तं समीपा ॥२॥

बृहतीर्जगतीशक्तिरीतीर्विन्यस्यति ध्रुवाः ।
महेश्वरी वराराध्या मातुर्ज्ञानमयी तनुः ॥३॥

महेश्वरीव्यापारमाह । जगतीशक्तिरीतीः लोकशक्तीनां कार्यकारिणीनां पद्धतीः ॥३॥

उद्योजयति वेगं च शक्तिं तासां महाबला ।
ओजोमयी तनुर्मातुर्महाकाली मदोत्कटा ॥४॥

महाकाल्याः कार्यमाह ॥ तासां लोकशक्तीनाम् ॥४॥

सौन्दर्यरूपिणी मूर्तिः सामरस्यपरायणा ।
तासां लयप्रमाणानि महालक्ष्मीः प्रपश्यति ॥५॥

तासां शक्तीनाम् ॥५॥

महासरस्वती त्वासां व्यवस्थां च सविस्तराम् ।
सम्बन्धं सर्वभागानां कार्यनिर्वाहमुत्तमम् ॥६॥

संयोजनं च शक्तीनाममोघपरिकल्पनम् ।
याथातथ्येन पूर्तिं च सिद्धिं समधितिष्ठति ॥७॥

शास्त्रं शिल्पं कला तन्त्रं वस्तूनां पारिभाषिकम् ।
महासरस्वती त्वेषामधिष्ठात्री प्रतिष्ठिता ॥८॥

महासरस्वत्यधिकारः कथितः ॥६-८॥

मन्दाक्रान्ता

प्राज्ञं हस्तं करणकुशलं कर्मसिद्धस्य चक्षुः
ज्ञानं रूढं सुदृढनियतं सूक्ष्मतत्त्वं तितिक्षाम् ।
अन्तर्बोधोचितमणु च यथावत्प्रकृत्या दधाना
स्वाभीष्टेभ्यो वितरतितरां सर्वतन्त्रस्वतन्त्रा ॥९॥

स्वाभीष्टेभ्यः ये तया वृतास्त एव तां वृण्वते, तस्या अभीष्टा-श्चेतीह ग्राह्यम् ॥ प्राज्ञहस्तादि स्वयं स्वभावतो दधाना वृतेभ्यः स्वीयेभ्यो ददाति ॥ सूक्ष्मतत्त्वं तत्त्वस्य भावनाचितत्वात् सूक्ष्मतेत्यर्थः ॥ अन्यत् स्पष्टम् ॥९॥

हंसमाला

सुदृढा श्रान्तिहीना निभृतं सावधाना ।
वरनिर्माणधात्री महती संविधात्री ॥१०॥

सकले कर्मतन्त्रे परिभाषान्यतन्त्रे ।
कुशला शासने वा बहुशिल्पस्य वेत्री ॥११॥

परिभाषान्यतन्त्रे कर्मतन्त्रे, परिभाषाधीने शिल्पकलादौ ॥१०-११॥

जगतां संविभागं तनुते तीव्रकर्मा ।
चतुरा मूर्तिरम्बा- तनुरेषा चतुर्थी ॥१२॥

चतुर्थी अम्बातनुः महासरस्वतीमूर्तिः ॥१२॥

नवरूपोपलम्भे परिणामे प्रकृत्याः ।
रचनायां च नूत्नं धृतिमत्याममुष्याम् ॥१३॥

अतिदीर्घप्रयासं बहुसूक्ष्मं च कर्म ।
प्रतिभात्युत्कदृष्टे- रसमाप्यं च मन्दम् ॥१४॥

श्लोकद्वयमेकवाक्यम् ॥ उत्कदृष्टेः उत्का दृष्टिर्यस्य सः, अक्षमया कथं कदा वा कार्यं समाप्तं स्यादिति उन्मनायमानस्य ॥१३-१४॥

अपि तु स्थैर्यनिष्ठं सकलं छिद्रहीनम् ।
भवति श्रेष्ठमन्ते परिपूर्णं समस्तम् ॥१५॥

निहितेच्छा तदीया सकलासु क्रियासु ।
अविशङ्का विनिद्रा विधुतक्लान्तिभारा ॥१६॥

तदीया इच्छा निहिता निक्षिप्ता भवतीति शेषः ॥१५-१६॥

प्रवणीभूय सेयं स्वयमम्बाऽऽस्मदर्थम् ।
अणु वा विस्तरेणा- प्यवलोक्याभिमृश्य ॥१७॥

लघु वा लोपलुप्तं बहुलं वापि रन्ध्रम् ।
परिवृत्तिं च सूक्ष्मा- मथ यद्वाऽसमग्रम् ॥१८॥

परिवृत्तिरिह विकृतत्वेन व्यावर्तनम् ॥१८॥

कृतमालोच्य पश्चा- दपि कर्तव्यशेषम् ।
नियतं तोलयित्वा निखिलं सा विधत्ते ॥१९॥

श्लोकत्रयमेकवाक्यम् ॥१९॥

हरिणी

किमपि न भवेदत्यल्पं वा स्फुटं लघु वा तथा
किमपि न भवेद्द्वेषच्छन्नं सुसूक्ष्ममथापि वा ।

अवहितदृशस्तस्यास्तु स्यान्न किञ्चन दुर्ग्रहं
किमपि जननीं नातिक्रामत्यमोघपरिश्रमाम्
॥२०॥

स्फुटं लघु वा, स्थूलदृष्टेः स्फुटं स्पष्टं लघु अनादरणीयत्वेन प्रतीतमपि ॥२०॥

निहितविभवं रूपं यावन्न याति निजं वरं
स्वपदमुचितं सर्वोऽप्यंशो न यावदितोंऽशिनि ।
प्रभवति फलं दातुं यावन्न वा प्रतिपालितं
मुहुरपि च तं तावत् संस्कुर्वती जननी स्थिता
॥२१॥

अंशिनि सर्वोऽप्यंशः एकैकोऽपि भागः उचितं युक्तं स्वपदं स्वीयं स्थानं यावन्न इतः गतः प्राप्त इत्यर्थः ॥ प्रतिपालितं प्रतीक्षितं फलम् ॥२१॥

रचनविधयेऽर्थानां शश्वन्मुहुर्मुहुरादराद्
युगपदखिलं दृष्टिस्तस्या अपेक्षितमीक्षते ।

मनसि कुरुते ग्राह्यं त्याज्यं विनिश्चिनुतेऽखिलं
करणसमयावन्तर्दृष्टिर्विधिं नियमानपि ॥२२॥

युगपदखिलमपेक्षितं, एकस्मिन्नेव काले यद्यदपेक्षितं अवश्यं तस्य सर्वस्योपरि तस्याः दृष्टिः पततीत्यर्थः ॥ तस्याः अन्तर्दृष्टिः करणसमयौ विधीन् नियमानपि विनिश्चिनुते । करणं उचितमुपकरणं समयं योग्यकालं विधीन् विधानानि पद्धतीरिति यावत् । नियमान् साङ्केतिकान् ॥२२॥

उपेन्द्रवज्रा

अनादरादुद्यममान्द्यतो वा
जुगुप्सतेऽम्बाऽनवधानतायाः ।
सरस्वतीमातुरिमे हि दोषाः
स्वभावबाह्याः सुतरां विगर्ह्याः ॥२३॥

अम्बा जुगुप्सते इति पूर्वार्धेनोक्तम् । उत्तरार्धेन हेतुमाह । हि यस्मात् इमे वक्ष्यमाणाः उत्तरश्लोकाभ्यां, दोषाः सरस्वतीमातुः स्वभावबाह्याः सुतरां विगर्ह्याः निन्द्याः । तस्मात् जुगुप्सते ॥२३॥

उपजातिः

सम्मिश्रितं चापलचोदितं वा
कृतं त्वयुक्ताचरितं च सर्वम् ।
अदाक्ष्यमल्पोद्यमता च कार्ये
प्रायस्समाप्तित्वकथा समस्ता ॥२४॥

प्रायस्समाप्तित्वकथा, ईषदसमाप्तिरित्यर्थाद्गम्यते, अत्यन्तसम्पूर्णसमाप्तेरीषन्न्यूनमपि न सह्यते देव्या । तस्मात् तत्कथनमपि वर्ज्यम् ॥२४॥

याः शक्तयो वा करणानि यान्य-
प्यतथ्यसंयोजनमप्यमीषाम् ।
अपव्ययो वाऽर्धकृताकृतार्थ-
विसर्जनं चेत्थमवद्यभावाः ॥२५॥

अमीषां शक्तिकरणानां अतथ्यसंयोजनं अयुक्तमत एव मिथ्यासम्बन्धविधानम् ॥ अपव्ययः अनुचितविनियोगः । अर्धकृताकृतार्थविसर्जनम्, अर्धं कृतः अर्धकृतः अकृतश्च अर्थः तयोर्विसर्जनं त्यजनम् ॥ इत्थं अवद्यभावाः दोषाः विगर्ह्याः मातुः महासरस्वत्याः स्वभावबाह्याः ॥२५॥

निर्वर्तिते कर्मणि मातुरस्या
न विस्मृतं किञ्चिदपि स्वकार्यम् ।
अस्थानक्लृप्तः परिवर्जितो वा
लोपेन युक्तो न च कोऽपि भागः ॥२६॥

अस्थानक्लृप्तः अनुचितस्थाने निहितः ॥२६॥

घन च पूर्ण सकल यथावत्
प्रशंसनीयं च भवत्युदग्रम् ।
न प्रीणयत्यूनमपीषदेनां
सम्पूर्णसिद्धेर्विहितार्थजाताम् ॥२७॥

सम्पूर्णसिद्धेरीषदूनमपि न प्रीणयत्येनामम्बाम् ॥२७॥

इन्द्रवज्रा

तस्यास्तु चेत्सर्जनपूर्तिसिद्धिः
द्राघिष्ठकालव्ययसाधनीया ।
तत्रापि सा तिष्ठति बद्धदीक्षा
सन्नद्धमूर्तिर्दृढमूहनीया ॥२८॥

उपजातिः

सर्वासु शक्तिष्वियमेव मातु-
श्चिरन्तनक्लेशसहा हि मूर्तिः ।
मर्त्ये च तल्लोपसहस्रजातेऽ-
प्यतीव कष्टं क्षमते कृपार्द्रा ॥२९॥

पृथ्वी

पुनः पुनरपि स्थिते विफलतां गतेऽप्युद्यमे
हितप्रियकरी स्मितोज्ज्वलमुखी समीपस्थिता ।
जहाति न च धीरतां न सुलभं परावर्तते
न मुञ्चति निजं ग्रहं प्रतिपदं च तस्याः करः
॥३०॥

अनन्यविषयं भवेत् सुदृढमस्मदिच्छाबलं
भवेम सरला वयं सततमार्जवोद्दीपिताः ।
अयं हि नियमो भवत्यखिलकार्यनिर्वर्तन-
क्षमाभरितचेतसो ननु तुरीयमूर्तेः कृतेः ॥३१॥

इच्छाबलं अनन्यविषयं भवेत् । वयं च सरला अकृत्रिमा भवेम । अयं हि नियमः तुरीयमूर्तेः कृतेः, महासरस्वत्याः कृत्यस्य ॥ ननु निश्चये ॥३१॥

शार्दूलविक्रीडितम्

द्वैधं न क्षमते मनः, क्षिपति सा
हासं च मर्मस्पृशं
छद्मन्यात्मविलोभनेऽप्यभिनये
नाट्ये च रङ्गक्षमे ।
अस्माकं परिहीनतासु जननी
कष्टेषु मित्रं वरं
माता मन्त्रधरोपदेशनिरता
स्थैर्यप्रशान्तोद्यता ॥३२॥

द्वैधीभूतं चित्तं न सहते । नाट्याभिनयात्मप्रतारणव्याजेषु मर्मस्पृक् तस्याः परिहसनं निष्करुणं भवतीत्यर्थः ॥ स्थैर्यप्रशान्तोद्यता, स्थैर्येण प्रशान्तं यथा तथा उद्यता ॥३२॥

स्रग्धरा

भ्राजन्मन्दस्मितेन प्रसृमरविभवे-
नाखिलं दुःखजालं

क्षिप्रं संहारयन्ती घनतिमिरमनः-

क्षोभसंवेगमूलम् ।

साहाय्यं स्मारयन्ती सततमुपगतं

सिद्धमस्माकमारा-

न्नित्यं सन्दर्शयन्ती दशशतकिरण--

द्योतमास्ते हि माता ॥३३॥

घनतिमिरमनःक्षोभसंवेगाः मूलं कारणं यस्य तद्दुःखजालं स्मितेन संहारयन्तीति सम्बन्धः । सततमुपगतं उपस्थितं साहाय्यमित्यर्थः । दशशतकिरणेत्यादिना नित्यसूर्यप्रकाशं दर्शयन्तीत्यर्थः ॥३३॥

शार्दूलविक्रीडितम्

सामग्र्यं प्रकृतेर्नयत्यविरतं

यन्नः परस्याः परं

नैश्चल्येन निरन्तरोद्यमरतां

तस्मिन् सतीं प्रेरणे ।

तामेवाखिलशक्तिकर्म जननी-

**मालम्बते पूर्तये**
**सा देहस्य हि भौतिकस्य कुरुते**
**मूलप्रतिष्ठां दृढम् ॥३४॥**

यत् प्रेरणं नः अस्मान् परस्याः प्रकृतेः सामग्र्यं अविरतं नयति, समग्रां सर्वांशपूर्णां परां प्रकृतिं प्रापयतीत्यर्थः । तस्मिन् प्रेरणे सतीं वर्तमानां व्यापृतामिति यावत् ॥ नैश्चल्येन निरन्तरोद्यमरतां तामेव जननीं महासरस्वतीमेव अखिलशक्तिकर्म अखिलानां शक्तीनां महेश्वर्यादीनां कर्म (कर्तृ) पूर्तये आलम्बते, सिद्धिप्राप्तिद्वारा चरितार्थत्वाय इमामेवाश्रित्य वर्तत इत्याशयः ॥ सा हि देवी महासरस्वती भौतिकस्य देहस्य अन्नमयस्य मूलप्रतिष्ठां दृढं कुरुते ॥ असिद्धेचान्नमयदेहे क्व स्यात् प्रतिष्ठा महेश्वर्यादिभिरनुगृहीतानां ज्ञानादीनाम्? अत एवान्यासां मूर्तीनां कर्म सफलत्वायेमां देवीमाश्रित्य वर्तत इत्युक्तम् ॥३४॥

प्रमाणिका

**तया बहुश्रमेण वस्तु विस्तरेण साध्यते ।**
**विनिर्मितिः सुवर्मिता च कीलिता निरुह्यते ॥३५॥**

वस्तु द्रव्यम् ॥ विनिर्मितिः दिव्यशक्तिव्यापाराणां आधारत्वेन शरीरनिर्माणम् ॥ सुवर्मिता सुष्ठु कवचिता रक्षितेत्यर्थः । कीलिता कीलबन्धेन दृढीकृता ॥३५॥

## ११

# उत्तरभागः

### सिद्ध्युपायविचारपूर्वकं सिद्धिविवरणम्

पादाकुलकम्

मातुर्देव्या मूर्तय इतराः
सन्ति महत्यः सुदुरवताराः ।
भूचैतन्यक्रमपरिणामे
प्रामुख्येन तु धुरि नासन्याः ॥१॥

अवतारयितुं सुतरां दुश्शकाः सुदुरवताराः । अस्मिन् प्रचलति भुवः परिणामे महेश्वर्यादिवत् अग्रे न ताः स्थिताः ॥१॥

याः सन्निधयोऽत्यन्तमवश्याः
वैज्ञानिकसाक्षात्काराय ।

तासामास्ते मुख्यतमैका
गहनतमोर्जितसम्मद्कलिका ॥२॥

याः सन्निधयः, या इतराः शक्तय उक्तास्ता एव सन्निधयः ॥
तासामेका अत्यन्तरहस्यवीर्यज्वलितप्रहर्षोद्रेकसम्पन्ना ॥२॥

मूर्तिः प्रमद्भरानन्दस्य
प्रवहति यः परदिव्यप्रेम्णः ।
अथ चात्यन्तोन्नतशिखराणां
वैज्ञानिकचैतन्यपदानाम् ॥३॥

निम्नतमानामिह गर्तानां
भौतिकवस्तुप्रकृतिपदानाम् ।
समपोह्यान्तरमुभयेषां यः
प्रतिसन्धानं प्रभवति कर्तुम् ॥४॥

प्रमद्भरानन्दस्य मूर्तिः आनन्दमयी मूर्तिः ॥ यः आनन्दः परदिव्यप्रेम्णः (अपादानं) प्रवहति ॥ अथेत्यारभ्य कर्तुमित्यन्तमेकं वाक्यम् ॥ उपरि विज्ञानशिखराणामिहाधश्च जडप्रकृतिस्थानानां च

उभयेषां च यदन्तरं वर्तते तदपोह्य, यः आनन्दः प्रतिसन्धानं कर्तुं प्रभवतीति सम्बन्धः ॥३-४॥

दिव्यतमाद्भुतजीवनमर्मो-
द्धाटनकीलो यत्र विभाति ।
कर्मेतरशक्तीनां भुवने
गूढो योऽद्याप्यखिलं धत्ते ॥५॥

यत्र आनन्दे दिव्यजीवनरहस्योद्धाटनसाधनं वर्तते । यश्चानन्दः इतरशक्तीनामखिलं कर्म अद्यापि गूढः सन् न तु प्रकाशं धत्ते ॥५॥

किन्तु तमःस्थाऽऽहन्ताकलिता
नियमितसीमा मनुजप्रकृतिः ।
न गृहीतुं ताः सन्निधिवर्याः
शक्तीर्महतीः शक्ता भवति ॥६॥

मनुजप्रकृतिः अहन्ताकलिता अहम्भावग्रस्ता । नियमितसीमा, सर्वतोमुखं सावधिकत्वं मानुषप्रकृतेः, तस्मान्महतीः शक्तीः आनन्दमय्याद्याः गृहीतुं न शक्ता ॥६॥

तासां वीर्यत्वदुत्कटकर्म
प्रभवत्येषा न च धारयितुम् ।
संस्कृतिसिद्धां परिवृत्तिमिते
स्वान्तप्राणशरीरत्रितये ॥७॥
शक्तिचतुष्के समरसभावात्
स्वेच्छाप्रचलनसिद्धिं प्राप्ते ।
ताः स्युर्व्यक्ताः शक्तय उर्व्या
विज्ञानीयं कर्म च साध्यम् ॥८॥

तासामिति पूर्वार्धं स्पष्टम् ॥ उत्तरार्धस्य उत्तरश्लोकेन सम्बन्धः ॥ संस्कृतिसिद्धां संस्कारविशेषेण सिद्धां परिवृत्तिं परिणामकार्यफलितां रूपान्तरस्थितिं इते प्राप्ते, स्वान्तप्राणशरीरत्रितये अन्न-प्राण-मनोमयेऽस्मिन्नाधारे शक्तिचतुष्के महेश्वर्यादौ समरसभावात् सामरस्यात् संवादादिति यावत्, स्वेच्छाप्रचलनसिद्धिं स्वाभीष्टानुसारेण व्यापृतिं प्राप्ते सति, ताः आनन्दमय्याद्याः शक्तयः व्यक्ताः स्युः स्पष्टा भवेयुः ॥ तदा विज्ञानीयं कर्मापि साध्यं भवति ॥७–८॥

सम्भृत्य यदा स्वात्मनि मातुः
प्राकाश्यं ते नीताः सकलाः ।

एते मूर्तिविशेषास्तेषां
व्यापाराः पृथगपि सम्भूय ॥९॥

समरसभावादैक्यं च यदा
गमिताास्ते च स्वयमपि तस्याम् ।
वैज्ञानिकनिजदैवतभावान्
अधिरूढाश्च यदा विलसेयुः ॥१०॥

यदा सकलास्ते एते मूर्तिविशेषाः मातुः स्वात्मनि सम्भृत्य प्राकाश्यं नीताः प्रापिताः भवन्ति, तेषां मूर्तिविशेषाणां पृथगपि प्रत्येकं च व्यापाराः सम्भूय समरसभावात् सामरस्येन तस्यां मातरि ऐक्यं च यदा गमिताः प्रापिताः, यदा च मूर्तिविशेषाः मातरि वैज्ञानिकनिजदैवतभावानधिरूढाः सन्तः विलसेयुः, तदेत्युत्तरश्लोकेन सम्बन्धः ॥९-१०॥

स्वयमेव तदा परमा माता
निजरूपेण प्रकटीभूता ।
मान्यतमैवं च महाशक्ति-
र्विज्ञानात्मा विश्रुता भवति ॥११॥

तदा माता विज्ञानमयी महाशक्तिः प्रकाशा भवतीत्यर्थः ॥११॥

ऐश्वर्याणि स्वीयान्यथ सा
ज्वलितान्यतिशयवन्ति च महसा ।
अवचनविषयात्तेषां व्योम्नो
वर्षन्त्यम्बाऽऽहरति महिम्नः ॥१२॥

अवचनविषयात् वाचामगोचरात् तेषां ज्वलितानां ऐश्वर्याणां व्योम्नः मूलस्वरूपादाकाशात् महिम्नः महत्वानि उज्ज्वलितानि अतीतानि, वर्षन्ती आहरति उपनयति ॥१२॥

सक्रियदिव्यप्रकृतितयेयं
मनुजप्रकृतिः परिवर्तेत ।
विज्ञानीयस्य यतो निखिलाः
सत्यस्य तदा चिद्रूपस्य ॥१३॥

सत्यस्य तथा शक्तिमयस्य च
मूलाध्वानः सङ्ग्रथिताः स्युः ।

**नित्यस्य परस्यापि लयानां**
**जीवविपञ्ची सदृशी च भवेत् ॥१४॥**

मनुजप्रकृतिः सक्रियदिव्यप्रकृतितया परिवर्तेत । मानुषी प्रकृतिः क्रियोन्मुखदिव्यप्रकृतित्वेन रूपान्तरं प्राप्नुयात् । यतः यस्मात् विज्ञानीयस्य चिद्रूपस्य सत्यस्य शक्तिमयस्य सत्यस्य च निखिलाः मूलाध्वानः सङ्ग्रथिताः स्युः संयोजिता भवेयुः । परस्य नित्यस्य वस्तुनो लयानां सम्बन्धसाम्यव्यवस्थापकानां मात्राविशेषाणां सदृशी अनुरूपा भवेत् जीवविपञ्ची जीवितवीणा, तस्मात्परिवर्तेतेति सम्बन्धः ॥ अत्रेदमवधेयम् ॥ चिद्रूपेण शक्तिरूपेण च सत्यस्य आविष्करणार्थाः मूलमार्गाः बहवः । तेषामिह जीवे संयोजनेन जीवितचर्या नित्यवस्तुनो लयानुरूपा भवेदित्यर्थः ॥

चिद्रूपशक्तिमयसत्यस्य मूलाध्वनां तन्त्रीस्थानीयत्वं, जीवस्य वीणास्थानीयत्वं च विवेचनीये । यथा तन्त्रीसंयोजनेन वीणा वादनक्षमा लयं भजते, तथा जीविते सत्यज्ञानमार्गाणां सत्यशक्तिमार्गाणां च व्यवस्थापनेन जीवितं दिव्यं भूत्वा नित्यस्य वस्तुनः लयानुरूपं वर्तितुं विलसितुं च शक्नोतीति तात्पर्यम् ॥१३-१४॥

**इच्छसि चेत्त्वं परिवृत्तिमिमां**
**मातुस्तस्याः शक्तीनां च ।**

हस्तन्यस्तः स्वयमेव भवेः
निष्प्रतिबन्धं निर्वादमपि ॥१५॥

साधनोपायमुपदिशति ॥१५॥

सा च तवान्तर्निष्प्रतिरोधं
स्वीयं कार्यं कुरुतां, त्वयि तु ।
सुखनम्यत्वं शरणागमनं
प्रज्ञेत्येतत्त्रितयमवश्यम् ॥१६॥

कुरुतां, वाक्यसमाप्तिः । त्वयि तु, अपि तु त्वयि सुखनम्यत्वादित्रितयमवश्यं स्यात् ॥ सुखनम्यत्वं, यथा मृदः कुम्भीभावे सुखेन नम्यत्वं कुम्भकारेच्छानुसारेण, तथेह सार्वात्म्येन वश्यत्वमभिप्रेतम् ॥ शरणागमनं निःशेषमात्मार्पणम् ॥ प्रज्ञा उपलब्धिः ॥१६॥

हृदये मनसि प्राणे देहे
तद्विवरेष्वप्युपलब्धिस्ते ।
स्यादपि मातुस्तच्छक्तीना-
मपि च ज्ञानं तत्कार्याणाम् ॥१७॥

स्पष्टम् ॥१७॥

आंन्ध्ये तिष्ठति तमसि त्वयि सा
समयेष्वज्ञेष्वंशेष्वपि ते ।
स्वीयं कार्यं यद्यपि शक्ता
कर्तुं कुरुते च परा माता ॥१८॥

तवं सञ्जातविबोधस्य तया
यत्तु प्रत्यक्षव्यवहारे ।
चलति तदेवेदमिति न चिन्त्यं
भेदस्त्वनयोर्विधयोर्भवति ॥१९॥

यद्यपि तवाज्ञानदशायां जाड्यभूयिष्ठेष्वङ्गेषु माता स्वीयं कर्म करोत्येव, तथापि तव ज्ञानोदये यादृशं कुरुते कर्म, न तत्तादृशं भवति । भेदो भवत्युभयोः कर्मणोः ॥१८–१९॥

मातुर्हस्तस्पर्शस्यैषा
सुखनम्या ते प्रकृतिर्वश्या ।

स्यादेवं न तु संशयशीला
मानसमिव सा मा च विवादीत् ॥२०॥

प्रकृतिस्ते संशयशीला न स्यात् । यथा मनो विवादं कुरुते तथा न कुर्यात् ॥२०॥

स्रग्धरा

हस्तस्पर्शस्य मातुर्भवतु च सकल-
स्ते स्वभावः सुनम्यः
भव्योऽयं निर्विवादो मन इव न भवेद्
यत्तु वादानुरक्तम् ।
स्वस्यां पर्याप्ततायां दृढतरमपि यद्
विश्वसद्बोधशून्यं
ज्ञानोद्बोधस्य शत्रुर्भवति च परिवृ-
त्तेः सशङ्काविकल्पम् ॥२१॥

अथ प्रकृतेरन्न-प्राण-मनोमयत्वेन त्रिविधत्वात् त्रिधा प्रकृतिमुद्दिश्य कीदृशी स्याद् कीदृशी च सा न स्यादिति त्रिभिः श्लोकैः क्रमेण मनः-प्राण-शरीरदोषानुपन्यस्यति ॥

अयं ते सकलः स्वभावः मातुर्हस्तस्पर्शस्य सुनम्यः सुतरां नम्यः भव्यो निर्विवादो भवतु ॥ मन इव न भवेत् । यथा मनः तथा न भवेत् ॥ स्वस्यां पर्याप्ततायां दृढतरं विश्वसत्, मूर्खविश्वासोऽयमस्य । येन स्वपर्याप्ततायां तृप्तं भवति ज्ञानविमुखम् ॥२१॥

**माकार्षीदाग्रहं वा निजपथगमना-**
**सक्त एष स्वभावः**
**प्राणो वा यश्च मर्त्ये सततमिह भृशं**
**नित्यनिर्बन्धशीलः ।**
**दुस्सङ्कल्पात्मशक्त्या कुटिलगतिधरै-**
**रीषणैर्यैर्विरुन्धे**
**व्यापारं दिव्यशक्तेः सकलमनुपदं**
**प्रत्यवस्थानदक्षः ॥२२॥**

एष स्वभाव आग्रहं माकार्षीत् । प्राणो वा प्राण इव, यथा प्राणः करोतीत्यर्थः ॥ यश्चेति प्राणकार्यं विवृणोति ॥ प्रत्यवस्थानदक्षः प्रत्यवस्थानं निराकरणं परिपन्थित्वेन निरोधनं वा ॥२२॥

जाड्याशक्त्योस्तथायं तमसि धृतपदः
खेयरक्षाविशिष्टः
माऽऽवष्टम्भं विधत्तामलसजडगता
चिद्यथा स्थूलबोधा ।
निर्जीवप्रायकार्यक्रममुत निखिलं
बाधमानं च मौढ्यं
स्पर्शं चाक्रन्य रुन्धे सकलमपि च याऽऽ-
ल्पान्धसौख्यानुषक्ता ॥२३॥

यथा स्थूलबोधा चित् अवष्टम्भं विधत्ते, तथा अयं ते स्वभावः तमसि जाड्याशक्त्योर्धृतपदः खेयरक्षाविशिष्टः सन् अवष्टम्भं मा विधत्ताम् । तमसि अन्धकारे तमोगुणे वा जाड्ये निर्व्यापारत्वे अशक्तौ असामर्थ्ये च धृतपदः प्राप्तस्थानः अत एव खेयरूपया रक्षया विशिष्टः युक्तः, यथा योधाः खातप्रदेशेषु निलीनाः प्रतिपक्षप्रयुक्तास्त्रपातेभ्यः सुरक्षिताः भवन्ति, तथा जाड्याशक्तितमोरूपे खेये निलीनो भूत्वा स्वभावस्ते मा परिहार्षीन्मातुर्व्यापारमित्यर्थः ॥ स्थूलबोधा चित् पाञ्चभौतिकप्रपञ्चविषया जाग्रदवस्था प्रज्ञा ॥ तस्या व्यापारमाहोत्तरार्धेन ॥२३॥

शार्दूलविक्रीडितम्

बाह्याभ्यन्तरभावयोरवधृतं
निश्शेषमात्मार्पणं
सर्वस्मिन् प्रकृतेः समर्पयति ते
भागे सुखं नम्यताम् ।
तेजोबुद्धिबलादये प्रवहते
नित्यं निजोन्मीलनात्
सर्वत्रापि निरन्तरा त्वयि चिति-
र्जातप्रबोधा भवेत् ॥२४॥

शरणागतिः सुखनम्यता प्रज्ञेति साधनत्रयसम्पत्तिः पूर्वमुपन्यस्ता ॥ इदानीं तत्फलमाचष्टे ॥ निःशेषमात्मार्पणं (कर्तृ) प्रपत्तिरित्यर्थः । ते तव प्रकृतेः सर्वस्मिन् भागे सुखं सुखेनानायासेन नम्यतामर्पयतीति योजना ॥ चितिः प्रज्ञा च जातप्रबोधा भवेत् ॥ कथम्? निजोन्मीलनात् निजोन्मीलनद्वारा । उन्मीलनं विकसनं, ऊर्ध्वतः सर्वतः प्रवहते तेजोबुद्धिबलादये निरावरणत्वेन स्वात्मोद्घाटनम् ॥ तेजोबुद्धीत्यत्र तेजसे बुद्धये बलाय आदिशब्देन सौन्दर्यसामरस्यसम्पूर्तिसिद्धिभ्यश्च इति बोध्यम् ॥२४॥

स्रग्धरा

जातोद्बोधश्च देहः स्वचितिमपि मनोऽ-
तीतविज्ञानशक्त्या
संयोज्यैक्यं विधत्ते न तु पुनरधुनाऽऽ-
स्पष्टतायां निमग्नाम् ।
ऊर्ध्वं चाधः समन्तादनुभवति च यो
व्याप्नुवन्तीश्च देव्याः
शक्तीः सर्वाश्च मातुर्भवति च पुलकी
प्रेमसम्मोदहर्षैः ॥२५॥

देहस्यापि चिद्बोधो भवतीत्याह ॥ बोधे जाते देहस्य चितिः जाड्याद्विमुक्ता भवति, न तु पुनरधुना पूर्वमिव अस्पष्टतायां अप्रकाशतायां निमग्ना । देहः स्वचितिं मनोतीतविज्ञानशक्त्या संयोज्य ऐक्यं विधत्त इति योजयितव्यम् ॥ यो देहः प्रेमसम्मोदहर्षैः पुलकी सर्वा अनुभवतीति सम्बन्धः ॥ अन्यत् स्पष्टम् ॥२५॥

द्रुतविलम्बितम्

अवहितो भव मा कुरु वेदितुं
समवधारयितुं च समुद्यमम् ।

क्षितिजुषा लघुना तव चेतसा
त्रिभुवनीजननीमजनिं पराम् ॥२६॥

अवहितो भव, सावधानो भव भुवं गतेनाल्पेन मनसा त्रिलोकमातरं जन्मरहितां परां देवीं वेदितुं अवधारयितुं वा समुद्यमं मा कुरु मा यतिष्ठाः ॥२६॥

अपि च सङ्कुचितान्धविमर्शनैः
स्खलितवद्भिरपि ग्रहणैर्निजैः ।
सुदृढमात्मनि विश्वसदल्पया
जडधियापि निराश्रयदर्पया ॥२७॥

मन इदं विषयानतिमानसान्
निजभुवोऽभ्यधिकानपि भूयसः ।
वशयितुं निजमाननिदर्शने-
रनवरानवरानिव मित्सते ॥२८॥

एकवाक्यम् ॥ निजैर्ग्रहणैः स्वीयैर्ज्ञानैः । जडधिया च इदं मनः अनवरान् उत्तमान् अवरानिव अधमानिव मित्सते मातुमिच्छतीति सम्बन्धः ॥२७-२८॥

तमसि मन्दविभे दृढबन्धितं
बहुमुखाननियन्त्रणधोरणीन् ।
मनुजचित्तमिदं कथमन्विया-
दपरमं परशक्तिपदक्रमान् ॥२९॥

बहुमुखाननियन्त्रणधोरणीन् परशक्तिपदक्रमान् कथमन्वियादिदं मनुजचित्तम्? ॥२९॥

भुवनमातुरुदात्तनिरीक्षणं
निखिलकर्म च सत्वरसङ्कुले ।
पतनशीलधियां ग्रहणं नृणां
पटुतमे सुतरामतिधावतः ॥३०॥

मातुरुदात्तनिरीक्षणं कर्म च उभे सत्वरसंकुले अतित्वरं सङ्कीर्णं च । अत एव नृणां पतनशीलधियां ग्रहणं अतिधावतः । स्खलनस्वभावमानुषबुद्धिकर्तृकं ज्ञानं अतिक्रामतः ॥३०॥

अगणनीयगतेर्जगतीभुवो
न मितयो मितयो मनसो नृणाम् ।

**परममूर्तिभिदालघुपर्ययाद्**
**यदिह गच्छति सम्भ्रमतन्त्रताम् ॥३१॥**

जगतीसुवो मातुः अगणनीयगतेर्गणयितुमशक्यायाः गतेः मितयो मानानि नृणां मनसो मितयो न । मानुषमनोमानेभ्यो भिन्नानि मातृगतेर्मानानि । अत एव यत् मनः सम्भ्रमतन्त्रतां गच्छति सम्भ्रमाधीनतां गच्छति सम्भ्रान्तं भवतीति यावत् ॥ कुतः? परममूर्तिभिदालघुपर्ययात्, मातुः परममूर्तीनां भिदानां भेदानां लघु क्षिप्रं यथा तथा पर्ययात् परिवर्तनात् हेतोः ॥ बहुशीघ्रमूर्तिभेदपरिवर्तनस्य मानुषमानससम्भ्रमजनकत्वमुक्तम् ॥३१॥

आर्या

**लयबन्धानां विघटन-**
**घटनाभ्यामत्र मातृविहिताभ्याम् ।**
**तीव्रीकरणेन मन्दी-**
**करणेन च तत्र तत्र वेगस्य ॥३२॥**

**कष्टविशेषे कस्य चि-**
**देकामन्यस्य रीतिमन्यां च ।**

आश्रित्य व्यवहर्त्र्याः
श्रीमातुर्विविधमार्गचरणेन ॥३३॥

परिगृह्यैकां मुक्त्वा
पुनरन्यां सरणिमात्तमुक्तां च ।
सर्वां समूह्य मातुः
सङ्ग्रहणेनापि गाढसम्मूढम् ॥३४॥

गहनाविद्यावर्तन-
परिभ्रमाभ्यां परं किमपि धाम ।
उद्यान्तीं परशक्तेः
सरणिं नैतन्मनोऽभिजानीते ॥३५॥

दुरवगाहा मातुः कार्यवैचित्री कथिता चतुर्भिः श्लोकैः
॥३२-३५॥

तस्याः कुर्वात्मानं
विवृतं तां चैत्यया च संवेद्य ।

तृप्तो भव प्रकृत्या

दृष्ट्या वीक्षस्व चैत्यया देवीम् ॥३६॥

मनसो दुर्ग्रहा मातेत्यहेतुकमुक्तम् ॥ तर्हि कोवाऽऽभ्युपायस्तां वेत्तुं? आह । तस्या मातुः स्वात्मानमर्पयित्वा विवृतं कुरु । तां मातरं चैत्यया अन्तरात्मसम्बन्धिन्या सूक्ष्मया प्रकृत्या संवेद्य अनुभूय तृप्तो भव । चैत्यया सूक्ष्मया दृष्ट्या वीक्षस्व च, वीक्ष्य तृप्तो भवेत्यर्थः ॥

चैत्यपदमधिकृत्य किञ्चिद्वक्तव्यम् ॥ चितश्चितेर्वा निष्पन्नं चैत्यपदमभिप्रेयते, तत्तु चिन्त्यम् । संस्कृतवाङ्मये शास्त्रेषु मृग्य एव चैत्यपुरुषपदप्रयोगः ॥ वङ्गवैष्णवग्रन्थेषु प्राप्तप्रयोगमिदं चैत्यपदं भगवता श्रीअरविन्देन पुरस्ताद्वक्ष्यमाणेऽर्थे प्रयुज्यते ॥

अथ कोऽयं चैत्यः पुरुषः चैत्या प्रकृतिर्वा? उच्यते समासेन ॥ मानसाद्यन्तःकरणं स्थूलप्राणदेहादिबाह्योपकरणं उभे चोपयुज्य तदनुभूतिसारानादाय देहापातानन्तरं पुनर्जन्म यः स्वीकरोति स चैत्यः पुरुष उच्यते ॥ हृदयस्थानोऽप्ययं नेश्वरो भवति, यस्तु सर्वेषां भूतानां अगाधतमे हृदयाकाशेऽवतिष्ठते । अपि तु हृदयस्थमीश्वरमाश्रित्य तदुदितोंऽशुरिवांशस्तत्सम्बन्धितया बाह्याभ्यन्तरात्मकदेहस्य अन्तरतमस्येश्वरस्य च मध्यवर्ती जीवव्यक्तेर्मूल-

भूतो यः पुरुषः स चैत्यशब्दवाच्यो भवति ॥ तदीया प्रकृतिश्च चैत्येत्युच्यते ॥३६॥

सत्यस्य समुद्बोधे
सामञ्जस्येन ते हि निष्णाते ।
सत्योपलब्धिदक्षे
चैत्या प्रकृतिश्च दृष्टिरुन्नेया ॥३७॥

ते चैत्या प्रकृतिः चैत्या दृष्टिश्च ॥३७॥

मातैव ततः प्राणं
स्थूलं ज्ञानं मनश्च तव हृदयम् ।
दर्शयति स्वां प्रकृतिं
स्तुतीश्च देवी प्रकाश्य चैत्यांशैः ॥३८॥

चैत्यांशैः अन्तरात्मीयसूक्ष्मांशैः ॥३८॥

परिवर्ज्यतां प्रमादोऽ
विद्याक्रान्तस्य चेतसोऽस्माकम् ।

अभिलष्यति यद्दैव्याः
शक्तेर्व्यापारमात्मनोऽनुगुणम् ॥३९॥

अविद्याक्रान्तस्य मनसः प्रमादस्त्याज्यः । स कः? मनः स्वाभिप्रायानुसारेण जगन्मातुः कार्यमिच्छति । एष हि दोषः ॥३९॥

गाधानामनुरोधा-
दसंस्कृतानां यदाशयानां नः ।
काङ्क्षति मातुः कार्यं
सर्वज्ञानस्य सर्वशक्तेश्च ॥४०॥

यत् चेतः नः अस्माकं गाधानां बाह्यवर्तिनां स्थूलानामाशयानामनुरोधादनुसारेण मातुः सर्वज्ञानस्य सर्वशक्तेश्च कार्यं काङ्क्षति ॥४०॥

अद्भुतशक्त्या प्रतिपद-
मद्भुतसिद्ध्या प्रभाविशेषैश्च ।
दुर्दर्शैर्लब्धपदं
भवितुं चेतो महास्वनं कुरुते ॥४१॥

लब्धपदं लब्धं प्राप्तं पदं अङ्कनं यस्मिन् तत् चेतः ॥ अद्भुत-शक्त्यादिमुद्रितं भवितुं चेत उच्चैराक्रोशति, अद्भुतदर्शनोत्सुकं भवतीति भावः ॥४१॥

मदलेखा

नैवं चेन्मन एत- च्छङ्कि स्यात्तत्परमम्।
अस्तीहेत्यपि दैवं नैव प्रत्ययमीयात् ॥४२॥

एवं अद्भुतं न दृष्टं चेत्, दैवं पुरतो वर्तमानमपि प्रत्ययं नेयात् विश्वासं न गच्छेत्, नैव विश्वसितीत्यर्थः ॥ मनः कर्तृ ॥४२॥

अज्ञानक्षेत्रतटे- ष्वज्ञाने ऽव्यवहर्तुम्।
नोपर्येव समस्ता मातेहाप्यवतीर्णा ॥४३॥

भूयोऽजस्रमुदारां प्रज्ञां शक्तिमपाराम्।
अंशेनाच्छादयतेऽ प्यंशेनाविष्कुरुते ॥४४॥

प्रज्ञां शक्तिं च अंशेनाच्छादयते, अंशेनाविष्कुरुते च ॥४३-४४॥

मूर्तिभ्यः करणेभ्यः स्वीयेभ्यः सकलज्ञा ।
ते द्वे संहरति स्वे माता सैवमभीक्ष्णम् ॥४५॥

ते द्वे प्रज्ञां शक्तिं च ॥४५॥

आधातुं परिपक्वं तत्सर्वं परिवृत्तम् ।
अन्वेष्टुं मनसोऽसा- वध्वानं जगदम्बा ॥४६॥

चैत्यांशस्य वरस्या- प्युत्काङ्क्षानिरतस्य ।
युद्धायाऽहितशक्तेः प्राणस्यापि च पद्याम् ॥४७॥

कारावन्धनदुःखा- धीनायाः क्लेशभुवः ।
पन्थानं प्रकृतेश्च स्थूलाया अनुयाति ॥४८॥

सर्वमुद्देश्यं परिवृत्तं विधेयम् ॥ शरीर-प्राण-मनश्चैत्यप्रकृतीनां स्वाभीष्टपरिपाकसिद्धये तन्मार्गानेवानुसरत्यम्बा ॥४६–४८॥

केचित्तत्र परेच्छा- निर्णीताः सन्ति च ये ।
मन्दं वा ते समयाः सर्वे पालयितव्याः ॥४९॥

मन्दं वा शनैः शनैर्वा ।। समयाः प्रतिज्ञाताः नियमाः । परेच्छानिर्णीताः परस्य पुरुषस्येच्छया आदेशरूपया निर्णीताः निश्चितपूर्वाः ।।४९।।

**ये च ग्रन्थिलबन्धाः सङ्कीर्णास्ते प्रथमम् ।**
**कर्तव्याः शिथिलास्सं-छिन्ना नैकपदे स्युः ।।५०।।**

छिन्ना नैकपदे स्युः, हठान्न छेत्तुं योग्या इत्यर्थः ।।५०।।

**गच्छन्तीं परिणामं रक्षश्चासुर एताम् ।**
**भौमामाक्रममाणा- वासाते प्रकृतिं ताम् ।।५१।।**

परिणामं गच्छन्तीं परिणमन्तीं भौमां आक्रममाणौ रक्षश्चासुरः असुरराक्षसौ आसाते वर्तेते । प्राणमये लोके कोशे च उपरि असुरः तस्य किञ्चिदधस्ताद्राक्षसः इमां भूमिमाक्रान्तवन्ताविति भावः ।।५१।।

**जेतव्यावभिगम्य स्वे राष्ट्रे चिरभुक्ते ।**
**तत्क्षेत्रे तत्समयान् सङ्केताननुसृत्य ।।५२।।**

जेतव्यौ तौ असुरराक्षसौ । चिरभुक्ते चिरनिर्जितभुक्ते ।।५२।।

असन्मानुषभावोऽ- प्यत्येतुं निजमानम् ।
सन्नद्धव्य उपायै- रायासेन विनेयः ॥५३॥

आयासेन प्रयत्नेन विनेयः शिक्षार्हः । अक्षमा वर्ज्या ॥५३॥

आत्मानं समतीतं दूरं रूपमवाप्तुम् ।
नोद्धार्यः सहसाऽयं दौर्बल्यान्धतमःस्थः ॥५४॥

चिद्दिव्या शक्तिरुभे भातोऽनुक्षणमत्र ।
कर्तुं यावदपेक्षं कार्यं तद्यत्नविधेः ॥५५॥

आदिष्टां प्रतिपत्तिं गृह्णीतः शश्वदिमे ।
आकारं कल्पयतः पक्वं चापक्वभुवः ॥५६॥

आदिष्टां प्रागेव निर्णीतां प्रतिपत्तिमुपायमित्यर्थः । इमे उभे चित् दिव्या शक्तिश्च ॥ अपक्वभुवः पक्वमाकारं कल्पयतः ॥५४–५६॥

विज्ञाने त्ववतीर्णे साक्षात्त्वय्याचरति ।
विज्ञानप्रकृतित्वे शक्तिर्विज्ञानमयी ॥५७॥

त्वयि आधारे विज्ञाने अवतीर्णे तु, विज्ञानमयी शक्तिः विज्ञानप्रकृतित्वे आचरति, विज्ञानावतरणाद्विज्ञानप्रकृतित्वसिद्धेः ॥५७॥

**चेतश्चेदनुयासि प्रत्यक्षं पुरतस्ते ।**
**तिष्ठन्तीमपि वा त-न्नाभिज्ञास्यति देवीम् ॥५८॥**

**आभासेष्ववतीर्णं चेतो मानुगमस्ते ।**
**आत्मानं त्वनुगच्छेः प्रत्युद्बोधसमर्थम् ॥५९॥**

आभासेषु स्थूलेषु दृश्यमानेषु, प्रातिभासिकेष्वर्थेषु चेतो मन उत्प्लवते । तदनुसरणे वैयर्थ्यं बोध्यम् ॥५८–५९॥

**दिव्यायां परशक्तौ श्रद्धां धेह्यखिलं ते ।**
**सा दिव्यांशविवृत्या कुर्याद्दैवतरूपम् ॥६०॥**

परशक्तौ श्रद्धा निहिता चेत्, सा त्वयि पारमैश्वर्यबीजभूतानंशान् विवृत्य तेषां दिव्यप्रकृतिरूपं विदध्यात् ॥६०॥

इन्द्रवज्रा

**आदिष्टपूर्वा परिवृत्तिराराद्**
**विज्ञानभावेन सुदुर्निवारा**

यद्भूमिचैतन्यविकासपद्या
याता समारोहवती न चान्तम् ॥६१॥

आरात् समीपे । विज्ञानभावेन परिवृत्तिरादिष्टपूर्वा निवारयितुं दुश्शका ॥ वैज्ञानिकपरिणामः प्रागेव विहितो विषयः । भौमिक-चैतन्यपरिणामक्रमेण सोऽनिवार्यतया भवितव्य एव ॥ हेतुमाह । परिणामक्रमस्योर्ध्वारोहणगतिर्न समाप्ता ॥६१॥

उपजातिः

सोपानगम्ये परिणाममार्गे
तुङ्गं मनो न क्षितिचेतनस्य ।
इदं त्ववश्यं परिपाकसिद्धेः
तद्रूपनिष्पत्तिविधेश्च भूयः ॥६२॥

न च मनस्तस्य परा कोटिः । किन्त्वस्य परिपाकस्य सिद्धये स्थिररूपनिष्पत्तये च इदं त्ववश्यं, यदुत्तरश्लोकाभ्यां वक्ष्यते ॥६२॥

ज्योतिष्यायाति दिव्येऽस्य दृढाभिज्ञानपूर्वकम् ।
समाह्वानमितोऽधस्ताद्भवेन्न तु निराकृतिः ॥६३॥

स्यादूर्ध्वतः परानुज्ञेत्युभेऽवश्यमपेक्षिते ।
द्वयोस्तु धत्तो माध्यस्थ्यं मातुः शक्तिश्च सन्निधिः
॥६४॥

ज्योतिरागमने तस्य निराकरणमन्तरेण दृढसङ्कल्पेन प्रत्यभिज्ञानेन इत आह्वानमपेक्षितम्, ऊर्ध्वतश्च परमपुरुषस्यानुज्ञाऽऽवश्यकी ॥ उभयोरस्मदाह्वानपरमपुरुषानुज्ञयोः सम्बन्धं विधातुं मातुः शक्तिः सान्निध्यं च मध्ये वर्तेते ॥६३-६४॥

मालिनी

विदलयितुमवन्ध्या मातुरेवेह शक्तिः
प्रभवति हि पिधानं प्रावृतिं चापनेतुम् ।
घटयितुमपि पात्रं सिद्धरूपं विधातुं
न तु जगति तपस्या मानुषो वा प्रयासः ॥६५॥

मातृशक्तेर्माहात्म्यमाह ॥ नेह पुरुषकारस्तपस्या वा पिधानं विदारयितुं प्रावरणमपनेतुं पात्रं सिद्धं घटयितुं वा अलम् ॥६५॥

अनृतदुरितपाके मृत्युशोकेऽत्र लोके
तमसि कृतनिवासे सन्ततं सप्रयासे ।
उपनयति विधात्री ज्योतिरायुश्च दिव्यं
परममृतनित्यानन्दमग्र्यं च सत्यम् ॥६६॥

दुःखानृततमोमृत्युबन्धुरेऽत्र लोके ज्योतिर्दिव्यं जीवनं सत्यममृतस्य नित्यमानन्दं च आहरति श्रीमातैवेति शिवम् ॥६६॥

इति
श्रीमहर्षिरमणभगवत्पादानुध्यातश्रीभगवद्वासिष्ठगणपतिमुनिप्रवरान्तेवासिनः,
पूर्णयोगाचार्यश्रीमदरविन्दभगवत्पादानुध्यातस्य,
भारद्वाजस्य विश्वेश्वरसूनोः कपालिनः कृतिः
अनुवादग्रन्थोऽयं सटीकः
**श्रीमातृतत्त्वप्रकाशः**
**समाप्तः ॥**

# तत्त्वप्रभा

## मङ्गलाचरणम्

अधिष्ठाय परां शक्तिमीश्वरो व्यज्यते यतः ॥
अव्यक्तव्यञ्जको योगः स व्यञ्जयतु वः शिवम् ॥१॥

## सर्गप्रसङ्गः

सा शक्तिश्चितिरीशस्य चितेः कार्यमिदं जगत् ॥
निगमागमसिद्धान्तसारोऽयं विदितो विदाम् ॥१॥

परमोऽर्थः परं ब्रह्म शब्दस्तच्छक्तिरुच्यते ॥
अनयोरविभाज्यं तत्सत्यमेकं सनातनम् ॥२॥

परः शब्दात्मको भूत्वा शक्तस्तपति वर्धते ॥
स्वतोऽविभाज्यान्येतानि जगन्ति विसृजन्विभुः॥३॥

नानालोकाः प्रजायन्ते कारणादेकतो विभोः ॥
तस्मादेकत्र नानात्वमुत्पन्नमुपपद्यते ॥४॥

उत्पन्नानामनेकेषां लोकानामीशजन्मनाम् ॥
अनुत्पन्नस्य चैकस्य सम्बन्धो ध्रियते सतः ॥५॥

अथ चैकत्व-नानात्वसम्बन्धो ध्रियते न चेत् ॥
क्रमो वा नियतिर्न स्याल्लोकयात्रासु लक्षितः ॥६॥

नियतिर्यदि निर्मूला निरर्था सा भवेद्, यतः ॥
प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते ॥७॥

तस्मात्सर्वस्य लोकस्य गतिरर्थवती, यतः ॥
प्रज्ञानेतृ जगत्प्राहुरिदं नान्धेन नीयते ॥८॥

इच्छापूर्वमिदं सृष्टं नेश्वरस्य तटस्थता ॥
[illegible] न सम्बन्धोऽपि प्रसज्यते ॥९॥

अपूर्णः स्रष्टुकामोऽपि जगत्स्रष्टुं कथं प्रभुः ॥
आनन्दस्य समृद्धत्वात्पूर्णत्वादस्य सर्जनम् ॥१०॥

यस्माज्जगदिदं पूर्णादंशः पूर्णमुदश्यते ॥
तस्मादंशेऽपि सम्पूर्ण आनन्दः परमेश्वरः ॥११॥

कोऽप्यंशो जगदाकारस्तपसा जायते यतः ॥
तत्र पूर्णः परः शक्त्या रमते नित्ययेश्वरः ॥१२॥

एक एवाव्ययः पूर्णः सच्चिदानन्दलक्षणः ॥
उपादानं निमित्तं च विसृष्टेर्जगतः स्मृतः ॥१३॥

प्रकृतिः स्यादुपादानं जगतां ब्रह्मणो वपुः ॥
आकाशश्चिद्घनानन्दोऽप्यदितिर्वेदभाषया ॥१४॥

चितिशक्तिस्तपोवाच्या निमित्तं जगदुद्भवे ॥
सन्नेवमेक एवात्मा त्रिरूपः प्रोच्यते बुधैः ॥१५॥

अदितिः प्रकृतिः प्रोक्ता तपो मायेति कीर्तिता ॥
अदितिः सा त्वखण्डत्वान्मानान्मायेति गीयते ॥१६॥

एका स्वरूपं सत्यस्याऽपरा व्यापार उच्यते ॥
उभाभ्यां सर्जनं धत्ते स्वयमेको परात्परः ॥१७॥

शक्त्या यया मिमीतेऽयममेयं स्वं परः पुमान् ॥
माया सा कीर्त्यते कैश्चिदस्माभिस्तप इष्यते ॥१८॥

एवं त्रिरूपो भगवाननन्त–
स्तपः प्रभावाद्विसृजत्यजाण्डान् ॥
स्वांशेषु जातेषु विसृष्टपूर्वे–
ष्वात्मानमेकं बहुधा व्यनक्ति ॥१९॥

## सप्तलोकी

जगतोऽपि त्रिरूपत्वं त्रिरूपत्वात्परेशितुः ॥
व्यापारात्सिद्धमीशस्य तपश्चिच्छक्तिवाचिनः ॥१॥

भूर्भुवःस्वरिति ख्याता त्रिलोकी सृष्टिरुच्यते ॥
सेयं प्रकृतिरीशस्य कृता शक्तिविलासतः ॥२॥

गुणत्रयविभागेन लोकत्रयविभागिनी ॥
तमोरजस्सत्त्वमूर्तिरन्न-प्राण-मनोमयी ॥३॥

बृंहतस्तपसः पुंसो व्यापारो भावना ह्यसौ ॥
अखण्डमण्डलाकारपाकलीलाविनिर्मिता ॥४॥

सच्चिदानन्दरूपस्य त्रिरूपस्य परात्मनः ॥
इदं विपर्ययेणेह बिम्बितं भुवनत्रयम् ॥५॥

पराशरेण मुनिना शमीकाय निबोधिते ॥
लोकसंस्थानसङ्ख्याने रहस्यं किञ्चिदीरितम् ॥६॥

भूरादिसप्तलोकानां संस्थानं वर्णयन्मुनिः ॥
भूरादिलोकत्रितयमनित्यं कृतकं जगौ ॥७॥

जनस्तपस्तथा सत्यमिति चाकृतकत्रयम् ॥
महर्लोकं तयोर्मध्ये कृताकृतकयोर्द्वयोः ॥८॥

सप्तस्वेतेषु लोकेषु नित्यलोकास्त्रयः स्मृताः ॥
आनन्दाज्जन्म भूतानां आनन्दो जन उच्यते ॥९॥

चितेश्च शक्तिरूपत्वाच्चिच्छक्तिस्तप इष्यते ॥
सन्नेवात्मा सत्यलोक इति बोध्यं सतां मतम् ॥१०॥

तमेकं सच्चिदानन्दं परतत्त्वविदो विदुः ॥
जनस्तपस्सत्यमिति लोकसंस्थानवेदिनः ॥११॥

त्रैलोक्यस्येह भूरादेस्त्रैलोक्यस्य परस्य च ॥
सन्धिलोको महर्लोकस्तुरीयः संस्मृतो बुधैः ॥१२॥

कृताकृतकयोर्मध्ये द्वयोश्चापि त्रिरूपयोः ॥
अनेनैव त्रिलोकीयं कर्त्री कार्यत्वमाश्रिता ॥१३॥

नानात्वैकत्वयोः ख्यातिं भावयन्यो विराजते ॥
नानात्वैकत्वसंवादोऽमुष्मिन् लोके प्रतिष्ठितः ॥१४॥

तुरीयेऽसति लोकेऽस्मिन्मध्यमे महआह्वये ॥
त्रिलोक्यत्यन्तभिन्ना स्यात्त्रिरूपात्परमेशितुः ॥१५॥

परलोकत्रयं नित्यं परार्धमिति कीर्त्यते ॥
अपरार्धमिदं लोकत्रयं कृतकमीशितुः ॥१६॥

उभयोरर्धयोर्मध्ये राजन्तं पुरुषोत्तमम् ॥
महर्लोकपतिं विज्ञा विज्ञानमयमूचिरे ॥१७॥

आनन्दः परमं ब्रह्म प्रज्ञानमिति चक्षते ॥
लोकचक्रपरार्धस्य यत्रान्तर्भाव इष्यते ॥१८॥

तुरीयं धाम विज्ञानं तैत्तिरीयैर्महः स्मृतम् ॥
अपरार्धगतं ज्ञानं मनः शुद्धं स्वरात्मकम् ॥१९॥

भुवर्लोकात्मकः प्राणस्त्वपरार्धपरा क्रिया ॥
भूरित्यन्नमयो लोकस्त्वपरार्धावधिर्जडः ॥२०॥

सङ्क्षिप्यैवं समाख्याता लोकसप्तकधोरणी ॥
विचित्रबन्धरचना विनिष्पन्नेयमीशितुः ॥२१॥

## भूमिका

अवस्थाभेदनिर्मात्री चित्रबन्धा जगद्गतिः ॥
क्वचिद्गुप्ता क्वचिद्व्यक्ता चिन्मयी क्वचिदुल्बणा ॥१॥

परस्मात्प्रस्थिता सेयं भूमिकानां परम्परा ॥
सोपानकल्पिताकारा निःश्रेणिरिव निर्मिता ॥२॥

ईशस्य तद्विसृष्टस्य जगतश्चान्तरे स्थिता ॥
ऊर्ध्वाधोगतिकक्ष्येयमुभयीं कोटिमास्थिता ॥३॥

पद्या योगविदां हृद्या तमःपारमहोदया ॥
सोपानक्रमसम्पन्नाऽऽरुरुक्षोरधिरोहिणी ॥४॥

चिदियं परमेशस्य कक्ष्याक्रमविभासिनी ॥
भिन्नशक्तिगुणा ह्येषा भिद्यमाना च सर्वतः ॥५॥

## विज्ञानमयो मूलपुरुषः

जगतोऽनुप्रवेशोऽयं निर्वेशात्परमेशितुः ॥
महर्लोके समारब्धो विज्ञानमयभूमनि ॥१॥

अस्माकं मूलपुरुषो जीवत्वमिह बिभ्रताम् ॥
विज्ञानात्मा महर्लोके त्रिलोकी यद्वशे स्थिता ॥२॥

एष क्रियाज्ञाननिधिर्महसि प्रतितिष्ठति ॥
तुरीये धाम्नि सप्तानां व्याहृतीनां च मध्यमे ॥३॥

यस्यांशवोऽसङ्ख्यक्तीनां हेतवो मूलधातवः ॥
सूत्रात्मरूपनानात्मव्यञ्जका नियतक्रियाः ॥४॥

एकस्यैवात्मनो नानारूपाण्याविष्कृतान्यतः ॥
एकैकमपि तद्रूपं जीव इत्युच्यते बुधैः ॥५॥

विचरन्तीह भूतानि रूपाण्येव प्रजापतेः ॥
एकैकस्य च भूतस्य मूलांशः स तुरीयगः ॥६॥

अविच्छिन्ना दृष्टिधारा माहसी जगदीशितुः ॥
यतो भूतानि जायन्ते तद्रूपाणि पुनः पुनः ॥७॥

उत्पन्नस्येह भूलोके देहं स्थूलं शरीरिणः ॥
अत्र धारयितुं भूमौ यः प्राणः समपेक्षितः ॥८॥

स भुवर्लोकतो देहमभिमान्य विकारतः ॥
बिभर्ति व्यापृतस्तत्र समाविष्टो बुभुक्षया ॥९॥

मनस्त्रिलोकविषयं स्ववैभवविकारजम् ॥
पुरुषो भूमिगस्तस्मादिह ज्ञानक्रियाधरः ॥१०॥

भुवि सञ्चरतोऽस्येह पुरुषस्याल्पमेधसः ॥
प्राणो यथा भुवर्लोके स्वर्लोके च यथा मनः ॥११॥

तथाऽस्य महसि प्रोक्ता विज्ञानमयजीवता ॥
यत्रास्ते सर्वजीवात्मभूतोऽसौ पुरुषोत्तमः ॥१२॥

जीवानामस्मदादीनामादिमूलं परात्परः ॥
लोकानामपि तच्छक्तिर्नेत्री माता परात्परा ॥१३॥

ईशितव्यानुगुण्येन शक्तिमुल्लासयन्स्वयम् ॥
तपोवैभवसम्पन्नं महोऽध्यास्ते परः पुमान् ॥१४॥

## नवा सृष्टिः

परो निसर्गसिद्धेन सर्गसद्भावधायिना ॥
अपरिच्छिन्नमात्मानं तपसा मानहेतुना ॥१॥

परिच्छिन्नमिहांशेन दधानो लोकभुक्तये ॥
परिच्छेदेऽपि सम्पूर्णविकासाय विभासते ॥२॥

व्यक्तानि यानि तत्त्वानि तुरीये धाम्नि सन्ततम् ॥
तानि गुप्तानि भूलोके जडेऽस्मिन्पाञ्चभौतिके ॥३॥

अजस्रं सच्चिदानन्दं प्रकाशं महसि स्थितम् ॥
अधस्त्रिलोक्यामस्माकमप्रकाशमिह स्वयम् ॥४॥

भुवो गतिस्तु गुप्तानां प्राणादीनां विकासनम् ॥
प्राणस्याऽन्नेऽनुप्रवेशादन्नं प्राणवदास्थितम् ॥५॥

अन्नाद्विकासः प्राणस्य वृक्षादौ दृश्यते यथा ॥
मानुष्यके च मनसो विकासश्च तथा स्फुटः ॥६॥

विज्ञानस्य विकासः स्यादित ऊर्ध्वं भुवीह नः ॥
यस्मिन्सिद्धे भवेत्सिद्धं दिव्यत्वं मनुजन्मनः ॥७॥

परिणामक्रमद्वारः स नवः सर्ग उच्यते ॥
निर्बाधः परया शक्त्या भुवि जीवति मानवे ॥८॥

अयं भगवतः श्रीमदरविन्दमहामुनेः ॥
सर्गार्थदर्शिनः सारो दर्शनेभ्यः समुद्धृतः ॥९॥

तन्वी तत्त्वप्रभा सेयं कलितेह कपालिना ॥
रसिकानामिवार्धेन्दुकला कुर्याद्विदां मुदम् ॥१०॥

## तत्त्वप्रभा समाप्ता

शिरसिनगरे श्रीमन्दिनी मुद्रणालये मुद्रितम्

# संस्करणम्

३३, ४८, ११६ पुटेषु 'मदलेखा' इत्यत्र 'औष्णिहम्' इति पठितव्यम् ॥

९५ पुटे २ श्लोके प्रथमः पादः 'या इह सन्निधिभासोऽवश्याः' इति पठितव्यः ॥

१११ पुटे ३२ श्लोके उत्तरार्धे 'तीव्रीकरणान्मन्दीकरणादपि तत्र तत्र वेगस्य' इति पठितव्यम् ॥

| पुट | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| ३५ | ६ | विरच्य | विरचय्य |
| ४५ | १२ | चण्डजवसो | चण्डजवतो |
| ७६ | १३ | ईश्वरीसुमनसां | ईश्वरी सुमनसां |
| ११३ | ४ | मातेत्यहेतुकं | मातेति सहेतुकं |
| ,, | ४ | कोवा | को वा |
| ११९ | ६ | दौर्बल्यान्धतमःस्थः | दौर्बल्यान्ध्यतमःस्थः |

Copies can be had at

*Shri Aurobindo Ashram*
Pondichery.

*Shri Aurobindo Library*
Vepery, Madras.

*Arya Publishing House*
*College Street,*
Calcutta.

*Nandini Pustakalaya,*
Gokarn & Sirsi.